॥ श्रीः ॥

॥ श्रीगुरुभ्यो नमः ॥

# ॥ श्रीताटङ्कप्रतिष्ठामहोत्सवचम्पूः ॥



कैलासाचलतो महीमधिगतः श्रीशंकराख्यां वहन्
जित्वा योऽखिलदुर्मतानि परितः षण्णां मतानामपि ।
कृत्वा स्थापनमाशु काञ्चिविलसच्छ्रीकामकोटीरिते
पीठे स्थापितवान्स्वशिष्यमपि नः शंभुः सुखायास्तु सः ॥

किं च —

लोकत्राणपरायणः करुणया स्वानर्हकूर्मादिमा-
न्वेषान्तोषयुतो विधाय बहुधा शैलूषवद्यः प्रभुः ।
क्षेमं चाक्षयमातनोत्त्रिजगतां संत्रासितानां परै-
र्वैकुण्ठः स महानकुण्ठमहिमा पायादपायात्सदा ॥ २ ॥

अपि च—

दोषात्कालकृतात्पराहतधियां निर्भक्तिकानां नृणा-
माविष्कृत्य निजं प्रभावमतुलं कारुण्यतः केवलम् ।
सद्भक्तिं भवदुःखनाशनचणां याजीजनत्सा सती
चित्ते भातु सदापि मे भगवती माताखिलाण्डेश्वरी ॥

इदं च—

राज्ञा द्वारवती जगद्गुरुवरैर्दत्तं प्रसिद्धं मह-
लब्ध्वा यो बिरुदं समस्तविबुधैर्मान्यं महानैपुणीम् ।
साहित्ये सरसेऽवहच्च सदुपन्यासेषु शास्त्रेषु च
श्रीमान्सोऽनिशमान्तरे गणपतिः शास्त्री गुरुर्भातु मे ॥

एतच्च—

देवि त्वत्कृपयैव वक्तुमधुना किञ्चिद्यतेऽहं सुतः
भक्त्या केवलमत्र वाणि भवती मातानुगृह्णाति चेत् ।
मे वाग्जन्म च संभजेत्सफलतामेतां कृतिं पश्यता-
मानन्दश्च भवेन्न चेद्विधिवधु स्यात्तेऽपवादो ध्रुवम् ॥

अखिलाण्डनायिकायाः कलितं काञ्चीलसज्जगद्गुरुभिः ।
कर्णाभरणस्थापनमहमुद्दिश्याद्य कथ्यते किंचित् ॥ ६ ॥

तथा हि—

रम्यो माधवमाधवोज्वलमहागारव्रजालंकृतं
हारीभूतमरुद्वृधाहरिसरित्तीर्थैः पवित्रैः परैः ।
युक्तं मुक्तनिवासयोग्यविभवं वित्तास्तिकैर्मण्डितं
चोळेषु प्रथितं चकास्ति नगरं श्रीकुम्भघोणाभिधम् ॥

मासे मासे रचितमतुलं चोत्सवं विष्णुगौरी-
नाथादीनामितरनगरग्रामतो मोदयुक्तैः ।

द्रष्टुं प्राप्तैर्मनुजनिचयैः पूरिते राजमार्गे
यातुं यस्मिन्दृढबलवताप्याशु नो शक्यते हि ॥ ८ ॥

यस्मिन्कवेरतनुजातटमाश्रितं त-
त्सायंप्रगे प्रथितकर्मठविप्रबृन्दम् ।
आलोक्य वालिन इवैष च ऋश्यमूकः
के मेनिरे भुवि कलेर्विषयो न हीति ॥ ९ ॥

सह्योद्भवाहरिनदी कृतरेखया य-
द्धाता कलेर्न विषयो नगरं तवेति ।
प्राबोधयत्किल पुरैव ततो विहाय-
तत्सर्वतः कलिरसौ कुरुते विहारम् ॥ १० ॥

कुम्भेशनागेश्वरचक्रपाणिश्रीशार्ङ्गधन्वादिमदेववर्यान् ।
योगीशवत्स्वान्तरिदं विधाय विराजते पुण्यनदीतटे यत् ॥

महामखाख्ये बृहदुत्सवे च
पुरे प्रतिद्वादशवत्सरं मुदा ।
निजां जनिं यत्र च सार्थयन्ति
तीर्थेऽतिपुण्ये कृतमज्जना जनाः ॥ १२ ॥

यत्किल, नाकमिव सहस्रनयनदर्शनीयविभवं, अलकापुर-
मिव धनपतिसेवितम्, रजतगिरिरिव कलेशमूर्द्धन्यभूषितम्,

तुहिनगिरितटमिव सर्वमङ्गलाश्रयं निखिलनगरीशेखरीभूतं विराजतेतराम् ॥

यच्च, क्षीराम्भोधिमिव अनर्घरत्नाकरम्, लक्ष्मीजनकं च, विन्ध्याटवीतलमिव विविधपुण्डरीकभास्वरम्, कनकभूधरमिव विबुधनिकानिवासालंकृतम्, गाण्डीवधरमिव सन्ततधर्मोज्ज्वलम्, असकृदागच्छन्ति संसेवितुं सकला अपि जनाः ॥

येन च, महेश्वरशरीरेणेव विभूतिभास्वता, नारायणकटितलेनेव पीताम्बरमनोहरेण, विधातृपुरेणेव सततवेदाध्ययनध्वनिपवित्रितेन, नाकनायकेनेव अनिमेषलोचनदर्शनीयनिजमहिम्ना, अधरीक्रियन्ते सकलान्यपि नगराणि ॥

यस्मै च, लङ्कापुरायेव पुण्यजनाधिष्ठिताय, निशीथाकाशतलायेव सद्गणमण्डिताय, तापसहृदयायेव कल्मषविहीनाय, शारदशशितेजसे इव सुधोज्ज्वलसद्माभिरामाय, स्पृहयन्ते बृन्दारकबृन्दाण्यपि ॥

यस्माच्च, वासन्तपद्माकरादिव द्विजाल्यामोदकरात्, दिनमणेरिव सन्मार्गराजमानात्, पङ्कजभूमुखचतुष्टयादिव सर्वदा सरस्वतीविहारमण्डपभूतात्, कल्पमहीरुहादिव वाञ्छिताखिलफलवितरणचणान्, निखिलवैदिकलौकिककार्यनिर्वहणयोग्यानि वस्तूनि नयन्ति देशान्तराणि ॥

यस्य च, मलयाचलस्येव चारुचन्दनवासितस्य, पातालपुरस्येव सन्नागमण्डलमण्डितस्य, वाराणसीनगरस्येव विश्व-

नाथविशालाक्षीशोभितस्य, नन्दनवनस्येव अनवरताखिल-पुष्पसंपूर्णस्य, समागच्छन्ति सानन्दं सर्वे निवासाय ॥

यस्मिंश्च, युद्धभूतल इव गजाश्वरथपत्तिनिबिडिते, गन्धर्वनगर इव गीतवादित्रमनोहरे, वाल्मीकाश्रम इव अजस्रबोधितश्रीरामकथाप्रसङ्गे, द्वारकानाथ इव सदानन्द-लोकविलसिते, स्थितानि अतिकृपणेभ्योऽपि धनाकर्षणसम-र्थान्यापणबृन्दानि ॥

यत्रोन्नतान्सह्यभवातटस्थान्
श्रीनारिकेलाख्यतरून्फलाढ्यान् ।
विलोक्य पान्थाः ब्रुवते मरुद्वृधा
प्रभावतो भान्ति भृशं द्रुमा इमे ॥ १२ ॥

अपि च—

यत्र स्थिताः,

कावेर्याः पयसो रुचिः समधिका स्वर्गस्थनद्या इति
भ्रान्तिं नाकनिवासिनां चिरभवां विध्वंसनाय द्रुतम् ।
मूलापीतकवेरजोदकमिमे श्रीनारिकेलाः फले-
ष्वाहृत्याशु निवेदितुं सुरपुरं यान्तीति मन्येऽधुना ॥

पतिनिकटनिवासः शास्त्रलोकैकमान्यः
सततमपि सतीनां स्यादिति स्वं पतिं सा ।

जडनिधिमपि शीघ्रं प्राप्तुकामेव वेगा-
त्प्रवहति किल पूता सह्यजा यत्र मोदात् ॥ १५ ॥

किं च, एतादृशकवेरसुताधिकूलं विराजमानाः

मठास्त्रिचतुरा इह प्रथितकर्मठानां सदा
जपादिविधिचोदितं कलयितुं च कर्मादरात् ।
लसन्ति किल दर्शनक्षणविदग्धचेतोमला
सुबिल्वपनसादिभिः परिवृताश्च पुण्यद्रुमैः ॥ १६ ॥

एतन्मठद्वारदेशालंकारभूताः

पूतावातचलद्दलाभिधकरैरश्वत्थभूमीरुहा
हे लोका इह सह्यजामलपयःपूरे महापुण्यदे ।
स्नात्वा संसृतिघोरदुःखशमनं कृत्वा फलं जन्मनः
सद्यः स्वीकुरुतेति भान्ति कृपया संबोधयन्ती वनः ॥

अस्मिन्निस्तुलवस्तुविस्तृतवणिग्वीथीव्रजालंकृते
कावेर्या करुणालयेन कमलानाथेन कामद्रुहा ।
अन्यैश्चास्तिकभूसुरैः परिवृते पुण्ये पुरे तादृशः
श्रीमच्छंकरनामलोकगुरुराट् बाभाति रम्ये मठे ॥

श्रीमत्काञ्चिपुरीप्रसिद्धविलसच्छ्रीकामकोट्याख्यस-
त्पीठेशं प्रथितात्मवैभवयुतं चाद्वैतविद्यागुरुम् ।

दिक्कूलंकषराजदुत्तमयशोव्रातैः सदा भूषितं
श्रीमच्छंकरदेशिकेन्द्रमनिशं कुर्वे मदीये हृदि ॥ १९ ॥

लोकावनार्थधृतमानुषरूपराज-
च्छ्रीचन्द्रशेखरममुं सुकृतैकलभ्यम् ।
दैवे पुरेऽप्यसुलभं जनभाग्यरूपं
संसेव्य केचिदिह तं कृतिनो भवन्ति ॥ २० ॥

यश्च, परमेश्वर इव कलाधिपालं कृतः, सत्याश्रयोऽपि न विषादी नोन्मत्तशेखरः, रमापतिरिव सकलविबुधहितकरोऽपि न पुण्यजनशत्रुः, चतुरानन इव परमहंसोपरि विराजमानोऽपि, न जडजातजातः, नाकाधीश इव सुमनोगणसेवितोऽपि, न शतमन्युः, बाभाति ॥

यं च— जनकमिव तुच्छीकृतराज्यमपि न गृहाश्रमाभिलाषिणम्, वसिष्ठमिव आदृतब्रह्मवाक्यमपि न कौशिकशत्रुम्, मनुमिव सकलवर्णाश्रमधर्मबोधनचणमपि न राज्यासक्तम्, व्यासमिवावेदितपुराणपुण्यकथाप्रबन्धमपि नाविप्रकुलजातम्, सादरं प्रणमन्ति सकला लोकाः ॥

येन च, पङ्कजपतिनेव द्विजचक्रामोदकारिणापि न कुवलयद्वेषिणा, धर्मेणेव सूर्यानन्दजनकेनापि न दण्डधरेण, वरुणेनेव शीतस्वभावेनापि न जडपतिना, यक्षेश्वरेणेव

महेश्वरबद्धप्रीतिनापि न किन्नरेशेन, विध्वंस्यन्ते विनतजनतान्तरस्थतमोबृन्दानि ॥

यस्मै च, भारतायेव धर्मविजयवृत्तान्तप्रकटनपरायापि न कृष्णचरिताश्रयाय, रामायणायेव सुमन्त्रालोचनमहितायापि न खरवधबोधनपराय, भागवतायेव, भगवन्महिमवर्णनोत्सुकायापि अस्वीकृतकुचेलवृत्ताय, देवीभागवतायेव वर्णितश्रीपरदेवतास्वरूपायापि न देवतान्तरमहिमासहिष्णवे, समर्पयन्ति सादरं वन्दनानि ॥

यस्माच्च, व्याकरणादिव प्रकृतिभ्यः तद्धितानि विधीयतोऽपि न पादाङ्गलोपकारिणः, कणादतन्त्रादिवानुमानसाधितेश्वरस्वरूपादपि न प्राधान्येनानङ्गीकृतागमप्रमाणात्, मीमांसातन्त्रादिव आविष्कृताखिलवैदिककर्ममर्मस्वरूपायापि फलदातृत्वेनाङ्गीकृतेश्वरात्, वेदान्तदर्शनादिव अद्वैतात्मस्वरूपनिरूपणबद्धदीक्षादपि अनाविष्कृतनास्तिकमतप्रक्रियात्, सर्वेऽपि स्वस्वसुकृतानुसारं सदुपदेशं गृह्णन्ति ॥

यस्य च, कैलासस्येव कलेशशिरोमणिभूषितस्यापि नदुर्वर्णाश्रयस्य, तुषारभूधरस्येव सर्वमङ्गलोत्पत्तिकारणभूतस्यापि अजडात्मनः, काञ्चनाद्रेरिव समस्तविबुधालयभूतस्यापि अचापलताभाजः, विन्ध्याचलस्येव विविधप्राणिजीवनहेतोरपि अनाश्रितविषधरस्य, अच्छाच्छयशश्छटाभिर्धवलीक्रियते निखिलं जगन्मण्डलम्

यस्मिंश्च, शारदगङ्गाप्रवाह इव निर्मलान्तरभास्वरेऽपि न स्वीकृतोन्मत्तशेखरे, सारस्वतझर इव, स्वाश्रितपापहरेऽपि नाप्रकटीकृतनिजस्वरूपे, यमुनापूर इव स्वसंचारपवित्रितभूवनप्रदेशेऽपि अनङ्गीकृतकृष्णचरित्रे, कावेरीप्रवाह इव समस्तजीवनदानचतुरेऽपि अस्वीकृतभङ्गे, सकलजनचेतांसि सन्ततं रमन्ते ॥

तत्तादृशमहिमविराजमानेन श्रीजगद्गुरुसार्वभौमेन हि,

आसेतोरपि चाहिमाद्रिशिखराद्यत्रागतानां मही-
देवानां प्रतिवासरं शशिकलाचूडस्य देव्यास्तथा ।
स्वाद्वन्नं च ससूपपायसघृतापूपं निवेद्यादरा-
त्सर्वेषामपि यावदीप्सिततमं संदीयते भोजनम् ॥२१॥

सकलभुवनक्षेमाय दिवानिशमाराधितश्रीचन्द्रमौळीश्वरश्रीमहात्रिपुरसुन्दरीसुन्दरतरचरणारुणसरसीरुहः श्रीजगदाचार्यवर्यः अवश्यानुष्ठेयं पारायणपाठनपूजनादिकार्यं विना अन्यं च समयं क्वचिदेकान्तस्थाने निजचेतश्चारुस्फटिकसिंहासनारोपितसच्चिदानन्दरूपपरमात्मस्वरूपः गमयेत्समोदम् ॥

अथ कदाचित्, तत्तादृशमहिमालंकृतं श्रीलोकगुरुवरं श्रीजम्बुकेश्वरक्षेत्रनिवासिनः सर्वे महाजनाः समागत्य कुम्भघोणनगरं श्रीपरमाचार्यदर्शनोचितफलनालिकेरादिमण्डितपाणयः श्रीमठमाटीकमानाः सुसमये श्रीलोकाचार्यसंनिधिमधि-

गम्य सादरं साष्टाङ्गं प्रणिपत्य, उत्थाय बद्धाञ्जलयः तत्रैवातिष्ठन् ॥

गुरुवरः— अपि कुशलं भवताम् ?

महाजनाः— कुशलमेव तत्रभवतामनुग्रहेण ।

गुरुवरः—श्रीजम्बुनाथस्य श्रीमदखिलाण्डेश्वर्याश्चाभिषेकार्चनाराधनादिकं सर्वमपि निर्विघ्नमनुष्ठीयते वा ?

महाजनाः—क्रियते यथाशक्ति ।

इत्यावेद्यानुक्षणं तेषां मध्ये धीरतरः लौकिकज्ञः कश्चिदयमेवास्मदभिप्रायाविष्करणस्य समुचितः समय इति निश्चित्य सद्यः प्रणम्य, "अस्ति किञ्चिन्महास्वामिसंनिधौ विज्ञापनीयम्" इति निवेद्य, गृहीततदाज्ञापुरःसरं वक्तुमपाक्रमत ॥

लोकाचार्यप्रथितगुरुणा श्रीमहेशांशभाजा
तस्यै देव्यै कनककलितं यन्त्रराजाञ्चितं तत् ।
भक्त्या दत्तं भुवनसुखदं रत्नताटङ्कयुग्मं
देवी सापि स्फुरति महिता तेन चाद्यापि माता ॥

समस्तभुवनक्षेमैककलिताविर्भावायाः भगवत्याः श्रीमदखिलाण्डेश्वर्याः तत्रभवच्छ्रीशंकरभगवत्पादाचार्यवर्यसमर्पितं तादृशं श्रीचक्रात्मकं ताटङ्कयुगलमधुना किञ्चिज्जीर्णं दृश्यते, नातिविलम्बेन तदुद्धारणमारचय्यानुग्राह्या अखिला अपि तालोकाः—इति ॥

एतद्वचनमाकर्ण्य श्रीगुरुवर्यः— 'किमस्माभिरत्र तज्जीर्णोद्धारणं कर्तव्यम्?' इत्यपृच्छत् ।

तेऽपि एतद्वचनमाकर्ण्य संजातशङ्काः सविनयं साञ्जलिबन्धम्— 'न तथा निवेदनीयं श्रीमहस्वामिना' इति विज्ञाप्य, तत्ताटङ्काः श्रीमदखिलाण्डेश्वर्याः आदौ लोकक्षेमकृते कैलासादवतरता श्रीजगद्गुरुपरमाचार्येण यथाशास्त्रं स्वेनैव तत्ताटङ्कप्रतिष्ठा कृता; ततः, मध्ये मध्ये यदा यदा किंचिज्जीर्णं भवति तदा तदा श्रीकाञ्चीकामकोटिपीठाधिपेन तादृशपरमाचार्यशिष्यपरंपरागतेन प्राचीनाचार्येणैव समुद्धारितम् ॥

अधुनापि, मार्की षष्ठिसंवत्सरेभ्यः पूर्वं जीर्णमिदं ताटङ्कद्वयमपि एतत्पीठाभिषिक्ताचार्यवर्येणैवोद्धारितम्; अतः, तद्विषये एतत्पीठाभिषिक्तगुरुवराणामेवाधिकारः, नान्येषाम् । किं वक्तव्यं मादृशसामान्यजनानाम् । 'तस्मादवश्यमस्मत्प्रार्थनामङ्गीकृत्यानुग्राह्या श्रीमहास्वामिना' इति व्यजिज्ञपन् ॥

श्रुत्वा वाचं भुवनगुरुणाप्येतदीयां तदानीं
मातुर्देव्याः सकलजगतां कार्यमेतत्पवित्रम् ।
आद्याचार्यैः कलितमपि चानुष्ठितं पूर्वकाले
ह्येतत्पीठस्थितगुरुवरैः कार्यमेतच्च भाति ॥ ४३ ॥

इत्थं विचिन्त्य जगती गुरुराट् तदानीं
तेभ्यः सुभक्तिभरितेभ्य इदं ह्यवादीत् ।

चिन्ताधिका न भवतामुचितात्र कार्ये
संकल्पयोग्यमिदमद्य चलेन्महेश्याः ॥ ४४ ॥

अपि च—

सिद्ध्येच्छीघ्रं चैतत्कार्यं ह्यखिलाण्डनायिकाकृपया ।
भवतां संकल्पोऽस्मिन्माभूत्तत्कार्यमेवमेवेति ॥ ४४ ॥

इत्थं निवेद्य प्रसाददानेनैतानन्वगृह्णन् ।

तेऽपि सानन्दं प्रसादं गृहीत्वा, इतः प्रभृति सर्वदा सर्वे वय श्रीमहास्वाम्यागमनसमयाकाङ्क्षिण एव भवाम इति वन्दनपूर्वकं विज्ञाप्य स्वग्राममयासिषुः ॥

इत्थं कृपाभरजुषा गणपत्यभिख्य
श्रीमद्गुरोर्मृडवधूकरुणाप्तिहेतोः ।
पञ्चापगेशकविना रचितेऽत्र चम्पू
ग्रन्थे समाप्तिमगमत्स्तबकोऽयमाद्यः ॥



## द्वितीयस्तबकः ॥



जगद्गुरुवरोऽथ स प्रथितवैभवाढ्यो निजं
प्रधानमधिकारिणं स्वकसमीपमाहूय तम् ।
क्रमेण जययात्रया बहिरटाम ईशाज्ञया
चलेदगतनूभुवो महितकर्णभूषोत्सवः ॥ १ ॥

इति श्रीचन्द्रमौळीश्वरः संकल्पयति, तस्माद्विजययात्रोचितं सर्वमपि साधनं सज्जीकृत्य, नातिविलम्बेन प्रस्थानोचितसुमुहूर्तोऽपि निर्णीयतामिति समादिशत् ॥

सर्वाधिकारी, 'तथैव सज्जीकरोमि शीघ्रं सर्वम्' इति गृहीताज्ञः, स्वीयकार्यालयमासाद्य, सर्वेषामपि निदेशकारिणां निकटे एवमाज्ञापयत् ॥

श्रीताटङ्कयुगस्य किंचिदधुना जीर्णस्य तस्यार्थितः-
शिष्यैरुद्धरणाय भक्तिभरितैः श्रीदेशिकेन्द्रो भृशम् ।
कारुण्याकुलमानसः सपदि तत्संप्रार्थनासक्तहृद्भूत्वा-
स्माच्च बहिः करिष्यति जयां यात्रां जनान्रक्षितुम् ॥

अतः, श्रीविजययात्रायोग्यसामग्र्यः सकला अपि त्वरितमेव सन्नद्धा भवन्तु इति ॥

भृत्याः, पूर्वमेव सिद्धानि भवन्ति निखिलान्यपि साधनानीति न्यवेदयन्, सर्वाधिकारी, सद्यः, विपश्चिदपश्चिमैः विजययात्रोचितं प्रशस्ततरं कमपि मुहूर्तं निश्चित्य श्रीजगद्गुरुसंनिधावपि व्यजिज्ञपत् ॥

श्रीगुरुसार्वभौमोऽपि तथैव क्रियतामिति अङ्गीचकार ॥

अथ, कदाचित्स्वीयश्रीताटङ्कप्रतिष्ठामहोत्सवकरणाय, श्रीपरदेवतया प्रेरित इव, निखिलभुवनक्षेमंकरे शुभकरे मुहूर्तवरे, श्रीजगद्गुरुवरः विजययात्रया स्वास्थानाच्छ्रीमठान्निर्गत्य तत्रैव पट्टणे तदाराधनार्थमहमहमिकया बहुषु शिष्यगणेषु प्रार्थयत्सु सत्सु तत्रैव मासचतुष्टयं निवसन् यथोचितं सर्वानपि परिपूर्णमनोरथान् व्यतानीत् ॥

एतस्मिन्समये समीपविलसद्ग्रामस्थिता आस्तिका
नीत्वा क्षेमकरं जगद्गुरुवरं ग्रामं निजं सादरम् ।
देशं नश्च नृजन्मसाधुविभवं चाचार्यपादार्चना-
त्कार्यं सार्थमिति स्वयं समुदितश्रद्धाभरैर्मेनिरे ॥३॥

ततः क्रमेण तत्तद्ग्रामादागतानां मूर्तिमद्भक्तिश्रद्धे इवोज्ज्वलनां प्रार्थयतां छात्रसार्थानां प्रार्थनामुररीकृत्य तद्ग्रामानलंकृत्य तदिष्टानुसारं तत्र तत्र त्रीणि चत्वारि पञ्च षडिति दिनानि च क्वचिदेकवारं क्वचिद्वारद्वयं कुत्रचिन्मासमेकं च व्यभूषयत ।

गुरुवररचितं तत्पूतमद्वैतभाष्यं
गुरुवरकृपयैव प्राप्यमित्यात्तभक्त्या ।
शरणमुपगतानां शुद्धचित्तोज्वलानां
क्वचन गुरुवरोऽसावन्वगृह्णात्समोदम् ॥ ४ ॥

अपि च—

भक्तिपूर्वं क्वचित्साधु वर्णाश्रमाचार-
योग्यो विभो बोधनीयोऽधुना ।
धर्म इत्यर्थितः शिष्यबृन्देन
सोपादिशद्देशिकेन्द्रो दयावारिधिः ॥ ५ ॥

कुहचित्स्थले पवित्रे स्थिलैकान्ते परे स्वरूपे स्वे ।
संलग्नमना गुरुराट् समाधिवृत्त्या व्यराजदखिलेड्यः ॥

क्वचित्तत्र तत्र स्थितं राजमानं महेशं रमेशं गणेशं गुहं च ।
सहैवात्मशिष्यैर्गतो देशिकेन्द्रो मुदा सेवतैषमक्लृप्तोपचारः

कुत्रचित्सामान्यशास्त्रवाक्यार्थवर्णनेन अपरत्र निकटतटा-टीकमानाविनमत्पटुबटुकूटेभ्यः तदुचितेन धर्मोपदेशेन इतरत्र स्वसेवनागतचण्डपण्डितषण्डवर्णितवाक्यार्थपरिशोधनेन च परत्र पुण्यतीर्थयात्रया च समयमनैषीत् ।

एतस्मिन्समये कुलक्रमागतप्राभवः अनर्घरत्नपरीक्षाचण्ड-पाण्डित्ययुक्तः धर्मनिकर इव मूर्तिमान् आमध्यमलोकवि-

ख्यातनिर्मलयशोलंकृतः सकलजनश्लाघ्यसद्वृत्तोज्ज्वलः स्वशरीरदर्शनमात्रेणाविष्कृतमहापुरुषलक्षणः चेन्ननगरीशेखरीभूतः श्रीसदाशिवठाकराख्यः भूसुरवरः श्रीमदखिलाण्डेश्वरीताटङ्कप्रतिष्ठार्थं विजययात्रया बहिर्निर्गतः श्रीलोकगुरुशंकरभगवत्पादाचार्यवर्य इति कर्णाकर्णिकया श्रुत्वा एतादृशे लोकक्षेमंकरे श्रीपरदेवताकैङ्कर्ये प्रधानभूतं श्रीताटङ्कपरिष्काररूपं कार्यं स्वेन करणीयमिति श्रीपराशक्तिसंभूतनैसर्गिकभक्त्या धर्मकार्यसंजातश्रद्धया च सद्यः श्रीमदाचार्यचरणसरसिजसंसेवनोचितपरिकरेण साकं श्रीगुरुसंनिधिरधिगन्तव्य इति कृतनिश्चयो बभूव ॥

सद्यः स्वीयजनैश्च चेन्ननगरान्निष्क्रम्य सद्भक्तिकैः
क्षेत्रं सद्गुरुभूषितं स्वयमगाच्छ्रीस्वामिनाथोज्ज्वलम् ।
ज्ञात्वा श्रीगुरुसेवनाय समयं योग्यं सहैवागतै-
र्गत्वा तन्निकटं प्रणाममकरोत्सोऽयं प्रसादाप्तये ॥

आलोक्य तं प्रभुवरं दृढभक्तियुक्तं
मन्दस्मितोज्ज्वलमुखः करुणार्द्रदृष्टिः ।
नारायणस्मरणपूर्वमनुग्रहं तं
तस्मै व्यधाद्गुरुवरः स महान्समोदम् ॥ ८ ॥

एवं प्रणम्योत्थितं सदाशिवचरणारविन्दद्वन्द्वविधृतामन्दभक्तिभास्वरं सदाशिवाभिलाषिणं सदाशिवठाकराख्यं साञ्ज-

लिबन्धं तं शिष्यशिरोमणिं स्वसमीपे समुपवेशयत् समुचिते स्थाने भुवनगुरुसार्वभौमः ॥

गुरुवरः— अपि कुशलं सर्वेषाम्

सदाशिवः—लोकक्षेमदानैकबद्धदीक्षाणां तत्रभवतां भव्या-जानुग्रहपात्रीभूतानां मादृशशिष्यसार्थानां कथं अकुशलवार्ता-याः प्रसक्तिः ॥

गुरुवरः—किमिदानीं चेन्ननगरादेवागम्यते ।

सदाशिवः—तस्मादेव ।

श्रीगुरुवरः—श्रीचन्द्रमौळीश्वरदर्शनार्थमेव वा ?

सदाशिवः—श्रीमहास्वामिनामनुग्रहं आज्ञां च लब्धुं च ।

श्रीगुरुवरः—श्रीचन्द्रमौळीश्वरप्रसादलाभेनैव अस्मदनुग्र-होऽपि सिद्ध एव। नायमर्थः पृथक् प्रयत्नमपेक्षेत। सन्ततमस्म-दभिमततरे सकलजनहितकरे सत्कार्ये प्रवृत्तिमासेदुषो भवादृ-शोऽपि आज्ञाकाङ्क्षा कस्मै अथवा आचार्यानुमतिपुरःसरमेव कार्यमिति स्वीयशिष्यधर्मपरिपालनायेति भाति । भवतु, कं विषयमुद्दिश्याज्ञाप्रतीक्षा ।

सदाशिवः—(उत्थाय सप्रश्रयं साञ्जलिबन्धं च)

संकल्पं च विधाय तत्रभवता पूताखिलाण्डेश्वरी-
ताटङ्कोद्धरणाय तन्यत इयं प्रख्यातयात्राधुना ।

सर्वेषां कुशलाय लोकगुरुराट्स्थाने भृशं भास्वता
शिष्यव्रातकृतार्थनां करुणया स्वीकृत्य देव्याः कृते ॥

इत्थमाकर्ण्य लोकोक्त्या समुत्थितकुतूहलः ।
संपदां मे च सार्थक्यं संपादयितुमागमम् ॥ ९ ॥

श्रीगुरुवरः—अस्मिन्समये इदं कार्यमेवं करणीयमिति नास्माभिः संकल्पितः । किं तु प्राचीनाचार्यसंप्रदायमनुसृत्य पुण्यक्षेत्रनिवास पुण्यतीर्थस्नान स्वामिदर्शनादिकं कार्यमुद्दिश्य बहिर्विजययात्रया प्रस्थितं साम्प्रतम् । यदिदानीमेव स्वीयं ताटङ्कप्रतिष्ठाकार्यं पूरणीयमिति श्रीपरदेवतायाः संकल्पः स्यात् , तदा तदपि चलतु इत्यत्र ममाभिप्रायः । श्रीताटङ्कप्रतिष्ठामहोत्सवकरणबद्धादरैः लोकैः पुनः एतदर्थमेव विजययात्रास्वीकृतेति तत्र तत्र महानुद्घोषः क्रियते । तत्त्वं पुनरुक्तमेव ।

सदाशिवः—श्रीपराशक्तिसंकल्पानुगुणमेव कार्यसिद्धिर्भवेत् । न मादृशैः सामान्यजनैर्मनसाप्यन्यथाचिन्तयितुमपि शक्यते । अथापि तद्विषयं किमपि कैङ्कर्यं विधातुं तत्रभवदीयशासनानुग्रहलाभाय श्रीमत्संनिधिं प्राप्तोऽस्मि । तदनुग्राह्योऽयं जन इति ॥

श्रीगुरुवरः—कीदृशं तत्कैङ्कर्यम् ?

सदाशिवः—श्रीमदखिलाण्डनायिकायाः श्रीताटङ्कयुगस्य तत्रभवदाज्ञानुसारं यथाशक्तिसम्यक्परिष्करणरूपमेव ।

श्रीगुरुवरः—श्रीपराशक्तिरेव स्वकार्यपूर्तये भवन्तं प्रावर्तयदिति प्रतिभाति । एतादृशकार्यं सर्वदास्मान्निमित्तीकृत्य भवादृशशिष्यसमूहैरेवानुष्ठेयम् । प्रकृतविषये इदमेव प्रधानं कार्यं एतच्च निर्दोषरत्ननिचयकल्पनीयतया तादृशरत्नपरीक्षादक्षेण भवतैव सम्यक् कर्तुं शक्यते ।

सदाशिवः—

नाहं सम्यक्कर्तुं पण्डित इति मे मतिस्तथापि तया ।
देव्यां सहजोद्भवया भक्त्या कृष्टः प्रयत्नमिह करवै ॥

श्रीगुरुवरः—सन्ततविनयविभूषणस्य भवतः नैसर्गिक एवायं व्यवहारः एतत्कार्यकरणे त्वमेवार्ह इति लोकाभिप्रायं निरोद्धुं कथं शक्यते । पूर्वं स्वयमेवागत्य प्रार्थनाकरणेन एतत्कैङ्कर्यं भवन्मुखेनैव स्वस्याः करणीयमिति श्रीजगन्मातुरभिमतोऽपि स्यादिति मन्ये । भवतु तथैवेत्यन्वग्रहीत् ।

सदाशिवः—सद्यः श्रीजगदाचार्यचरणनलिनयोः प्रणिपत्याद्युनैवास्मत्कुलं पवित्रमासीत्, अर्थश्च सार्थः, जन्म च मे सफलम्, यस्मात् सत्स्वपि बहुशिष्यगणेषु मदीयजन्मान्तरीयसुचरितनिचयैः एतादृशपुण्यकैङ्कर्यनिर्वहणे श्रीपरमाचार्यानुग्रहोऽपि लब्धः ।

श्रीगुरुवरः—भवादृशानामास्तिकशिखामणीनां आजानसिद्धगुरुदेवताभक्तिभूषितानां नैतद्दुर्लभम् ।

सदाशिवः—अद्युनैव धन्योऽस्मि ।

श्रीगुरुवरः—अस्मात्प्रतिनिवर्तनसमये श्रीजम्बुनाथक्षेत्रमासाद्य श्रीजम्बुनाथाखिलाण्डेश्वरीदर्शनादिकं विधाय तत्पूजकमुखेन ताटङ्कयुगळमपि यथापरिष्करणयोग्यं सम्यक् वीक्ष्य सौकर्यानुसारं गम्यतामित्यवादीत् ।

सदाशिवः—गृहीतः शिरसा श्रीमदनुग्रहः इति सप्रणामं प्रसादं गृहीत्वा प्राप्तानुज्ञो बहिरयासीत् ।

तत्र स्थित्वा दिनयुगमथ श्रीजगद्देशिकेन्द्रा-
दाप्तानुज्ञो विमलसरितालंकृतं सह्यपुत्र्या ।
क्षेत्रं तादृग्लषितफलदं जम्बुनाथीयमाप्य
श्रीमच्छम्भुं व्यनमदखिलाण्डेश्वरीं दिव्यमूर्तिम् ॥

निवसन्दिनमेकमत्र मोदा-
दपि ताटङ्कयुगं निरीक्ष्य सम्यक् ।
स्वपुरं प्रतिपद्य चाम्बिकाया-
अतनोद्यत्नमसौ हि पुण्यकार्ये ॥ १२ ॥

अथ गुरुवर एष क्षेत्रवर्याण्यटन्स्वै-
र्विनयभरितशिष्यैः प्रार्थितो भक्तिपूर्वम् ।
कुतुकजलधिमग्नान्सर्वलोकान्वितन्व-
न्नभजदतिविशालं क्षौमसालं पुरं तत् ॥ १३ ॥

तत्र च दक्षिणदेशशेखरीभूतः सहजसंजातश्रीगुरुचरणसरोजभक्तिः प्राक्तनश्रीमदाचार्यवर्यव्यासपूजापरिचर्यालब्धश्रेयोऽभिवृद्धिः स्वशासनाधीनीकृततद्देशीयजननिकरः प्रवर्तयिता गोष्ठीनां अग्रगण्यो धैर्यशालिनां श्रीमदात्मनाथक्षेत्रालंकारभूतः एकाम्रनामा शिष्यशिखामणिः श्रीजगदाचार्यपादसरोजमूलमाश्रित्य कृतानेकप्रणामपूर्वकं एतद्वार्षिकश्रीव्यासपूजामहोत्सवः श्रीमदात्मनाथक्षेत्र एव विधाय तत्रत्याः सर्वेऽपि अनुग्राह्या इति प्रार्थयांचकार ।

श्रीगुरुवरः—एतादृशकार्यनिर्वहणश्रमः प्रागनुभूतचरः भवता । अतः नाधिकं वक्तव्यं श्रीचन्द्रमौळीश्वरसंकल्पानुसारं भवदिष्टसिद्धिर्भवेदिति प्रसादं दत्वान्वग्रहीत् । सोऽपि महता मोदेन स्वं ग्राममासाद्य पूर्वमनुभूततया श्रीपूजाब्राह्मणसमाराधनादीनां योग्यं यद्यत्करणीयं तत्कर्तुमारभत ॥

अथ गुरुवर एष क्षौमसाले जनाना-
मभिमतमनुसृत्य स्वल्पकालं च नीत्वा ।
गमनसरणिमध्ये प्राप्य किंचिद्विलम्बं
विमलमभजदाशु ह्यात्मनाथस्थलं तत् ॥ १४ ॥

तत्रस्थाः शिष्यवर्गाः गुरुवरचरणे प्रार्थयन्भक्तिपूर्वं
कार्यायाचार्यवर्येह्शरदिमहितापुण्यदासेवितॄणाम् ।
क्षेत्रेऽस्मिन्नात्मनाथक्षपितकलिमले पूतपूते मनोज्ञे
कृत्वा तां व्यासपूजां कलय जनचयान्धन्यधन्यानिहस्थान्

ततः एकाम्राख्येन शिष्येण स्वनिवासाय सज्जीकृतं समुचितं स्थानं अधिगम्य तद्दिनकृत्यमखिलमपि नियममन्वतिष्ठदाचार्यवर्यः ।

अन्येद्युर्लसदात्मनाथसदने श्रीव्यासपूजाकृते
बाह्ये वातपुरीश संनिधिगते रम्ये महामण्डपे ।
जातीचम्पकमल्लिकादिकुसुमैः सम्यक्कृतालंकृति-
स्थानं मञ्जुतमं सुगन्धभरितं सज्जीकृतं चोषसि ॥१६॥

श्रीलोकगुरुशेखरोऽपि प्रातः चतुर्थघण्टासमये उत्थाय तद्दिवसकरणीयं स्वीयं विशेषानुष्ठानमखिलमपि यथाविधि परिसमाप्य सार्धाष्टमघण्टासमये तत्तद्राजस्थानाद्यथासंप्रदायं सोपहारं प्रेषितैः तत्प्रतिनिधिभिः श्रीगुरुवरचरणसरसिजयुगलसहजभवभक्तिगरिमदृढगुणसमाकृष्टागतप्रभुतल्लजानिकरैश्च तत्क्षेत्रं परितो विराजमानेभ्यो ग्रामसहस्रेभ्यः अत्यद्भुतम् अतिपवित्रतमं श्रीव्यासपूजामहोत्सवमालोक्य जन्मसाफल्यं संपादनीयमिति समायातैः बहुजनसमूहैः निरन्तरं कवाचिते तत्क्षेत्रे राजकीयप्रधानाधिकारिभिः महता श्रमेण प्रदर्शितमार्गेण मन्दं मन्दं श्रीचन्द्रमौळीशसदनात् आत्मनाथालये सम्यगलंकृतं पूजामण्डपं प्रतिपद्य पूर्वं तत्तद्देवस्थानादागतदेवताप्रसादान् यथाक्रमं परिगृह्य तदनुपूजामुपक्रम्य विधिवद्व्यतानीत् ।

सर्वान्व्यासमुखानृषीन्निजगुरून्संपूज्य भक्त्या भृशं
श्रीमद्देशिकराडुपागतजनान्दूरात्प्रसादेप्सया ।
आलोक्याशु कृपारसार्द्रितमहापूतस्वदृष्ट्या मुदा
प्रादाच्छिष्यगणस्य सर्वफलदं व्यासप्रसादं तदा ॥ १७ ॥

इत्थं यथावदखिलान्यपि तत्र कृत्वा
श्रीचन्द्रमौळिविलसत्सदनं च तस्मात् ।
आगत्य पूजनमथाकलयच्छशाङ्क-
चूडस्य सर्वजनतापरिसेव्यमानः ॥ १८ ॥

ततः, रात्रौ सार्धसप्तमघण्टासमये श्रीमदात्मनाथदर्शनाय सपरिवारः प्रतस्थे श्रीलोकगुरुवरः तत्र प्रधानाधिकारिणा सभक्तिश्रद्धमुपचर्यमाणः पूर्वं श्रीविघ्नेश्वरं संसेव्य पश्चात् कैलासमिव सविलासं बालदिनकरनिकरविरा[illegible]मानदीपमाला-मण्डितं पुरोमण्डपमासाद्य भगवन्तं करुणानिधिं सुन्दरतरमि-न्दुशेखरमन्तर्ध्यात्वा एवं स्तोतुमुपाक्रमत ।

यया तव दृशा विभो भवजदुःखहन्त्र्यातनो-
र्विलोक्य सदनुग्रहं गिरिशवातपूरीशितुः ।
तया स दयया कदा महितयात्मनाथप्रभो
निरीक्ष्य वितनिष्यसे जनमिमं कृतार्थं भृशम् ॥ १९ ॥

अपि च,

असंख्यसुरकोटिषु प्रविलसत्स्वपि त्र्यंबक
त्वमेव शरणं ममेति च विहाय सार्वान्सुरान् ।
गतं निकटमद्य मां त्यजसि चात्मनाथेश चे-
द्भजेयमितरं कथं भवति वा दयालुश्च कः ॥ २० ॥

किं च,

शंभो वातपुरीश्वरेण गदितां श्रीपाण्ड्यमुद्दिश्य तां
वाचं पालयितुं विधाय सकलान्क्रोष्टून्हयानुत्तमान् ।
गत्वा तद्विलसद्गणैः सह मुदा वेदाश्वमारुह्य च द्रा-
क्तस्मै तुरगान्विभोर्पितवतः किं दुष्करं स्यात्तव ॥ २१ ॥

ततः सकलभुवनजननीं योगाम्बिकानाम्नीं श्रीभगवतीं अन्यान्यपि देवतानि यथासंप्रदायं संसेव्य श्रीचन्द्रमौळीश्वर-निवासगेहमभजत् ।

अपरेद्युः प्रभृतिपञ्चषदिनानि देशान्तरादागतपण्डितमण्ड-लीभ्यः शास्त्रवाक्यार्थवर्णनसदुपन्यासादिकं च विधाय स्वग्रामं प्रतिजिगामिषून्विदुषः क्रमेण तत्तदुचितमर्यादानुग्रहदानपुरःसरं प्रैषिषदाचार्यवर्यः ।

अथ प्रतिदिवसमपि प्रातः पञ्चमघण्टासमये श्रीजगद्गुरु-सार्वभौमः आलये यत्र देशे लोकोद्धारणार्थं करुणया श्रीपर-

मेश्वरः दक्षिणामूर्तिरूपमाधिगम्य निवसन् पुण्यशालिभ्यः शिष्येभ्यः स्वयं तत्त्वोपदेशमकार्षीत् । तादृशं पूततमं श्रीकुन्द-वृक्षमूलं प्रतिपद्य काष्ठवद्विराजमानः एकान्ते अष्टमघण्टावधि किमपि तत्वं ध्यायन् समयं नीत्वा श्रीमदद्वैतवेदान्तभाष्यपठ-नाय सन्नद्धानामास्तिकशिष्यसार्थानां प्रार्थनया निशिततरनि-यमपूर्वकं तत्रैव दशघण्टापर्यन्तं तेभ्यो भाष्योपदेशं विधाय तदनु, क्रमेण श्रीमदात्मनाथादिदर्शनपूर्वकं स्वसदनं संप्राप्य श्रीचन्द्रमौळीश्वराराधनतत्परोऽभूत् ।

इति स कुतुकमस्यामात्मनाथीयपुर्यां
भुवनगुरुवरोऽसौ सन्ततं वीतविघ्नम् ।
कलितनियमबृन्दो ध्याततत्वस्वरूपः
समयमगमयद्धि स्वीयशिष्यप्रपूज्यः ॥ २२ ॥

इत्थं कृपाभरजुषा गणपत्यभिख्य-
श्रीमद्गुरोर्मृडवधूकरुणाप्तिहेतोः ।
पञ्चापगेशकविना रचितेऽत्र चम्पू-
ग्रन्थे समाप्तिमगमत्स्तबको द्वितीयः ॥ २३ ॥

---

# तृतीयस्तबकः ।

एकाम्रनाम्ना भृशभक्तिभाजा
शिष्येण मासद्वयमादरेण ।
आराधितो लोकगुरूत्तमोऽसौ
श्रीरामसेतुं प्रति यातुमैच्छत् ॥ १ ॥

सद्यः श्रीजगद्गुरुवरः सर्वाधिकारिणमाहूय भावि महोदय-पुण्यकाले सेतुस्नानमपि लभ्येतेति प्रतिभाति तस्मात् श्वः विश्वरूपयात्रानन्तरं दक्षिणाशामुखेनैव विजययात्रा कार्या सज्जीक्रियन्तां सर्वाण्यपि साधनानीति समादिशत् ।

सर्वाधिकारी तथैवेति तदाज्ञां शिरसि कृत्वा सज्जीकृतवान् सर्वमपि ।

अन्येद्युर्नगरप्रदक्षिणकृते श्रीदेशिकेन्द्रो भृशं
शिष्यैरर्थित आत्मनाथचरणं संसेव्य पूर्वं ततः ।
एकाम्रादिमशिष्यलोकलषितं संपूरयन्तन्निशि
प्रातः प्रस्थितवान्निजैः परिजनैः श्रीरामसेतुं प्रति ॥

स्नेनैवागतभक्तशिष्यनिवहः श्रीदेशिकेन्द्रस्ततः
रामस्थापितविघ्नराजमहितं क्षेत्रं प्रपद्यामलम् ।
स्थित्वा वासरयुग्ममत्र कुतुकात्संसेव्य विघ्नेश्वरं
देवीपत्तननामकं प्रतिययौ क्षेत्रं प्रसिद्धं ततः ॥

आदिसेतुरित्याजगन्मण्डलं विख्यातं भगवता श्रीरामचन्द्रेण निर्विघ्नं पौलस्त्यस्य विजयाय सिन्धुतीरविरचितश्रीनवग्रहदेवतापूजनं आतुषारगिरिशिखरात् अनवरतागतजननिकरनिबिडितं तत्क्षेत्रमासाद्य श्रीजगदाचार्यवर्यः स्वपूर्वाचार्यानुष्ठितक्रमानुसारं नवग्रहपूजादिकं यद्यत्तत्र कर्तव्यं तत्तद्यथाविधि विधाय दिनमनु समुद्रस्नानपवित्रान् तत्क्षेत्रवासिनः स्वकृतसुवर्णदानवर्षणेन अतिमहत्यानन्दसागरे निमज्जयामास ।

स्थित्वादिसेतौ जगती गुरूत्तमः
स्नानादिकं सर्वमपि स्वकृत्यम् ।
कृत्वानयत्तत्र दिनत्रयं हि
विशुद्धचेता निखिलैश्च सेव्यः ॥ ४ ॥

ततः प्रस्थितोऽतो जगद्देशिकेन्द्रो
विलङ्घ्यार्धमार्गे त्रयं वासराणाम् ।
अगादन्तिकं द्राक् स रामेश्वरस्य
प्रशस्तैः समस्तैः स्वशिष्यैरुपेतः ॥ ५ ॥

तदानीं बहोः कालादारभ्य तत्रागतजननिचयसानन्दवर्णितश्रीजगद्गुरुशेखरगुणगणसमाकर्णनसंजातदृढभक्तिप्रेरितसिषेविषासहितैः कदा गमिष्यन्ति श्रीजगद्गुरुचरणाः कदा वा वयं च तद्दर्शनेनात्मानं कुलं च पवित्रीकुर्मः कदा वा तदीयसदुपदेशश्रवणेन अस्मादपारात्संसारपारावारात् उत्तराम इति बहुविधचिन्तया सन्ततं सादरं चातकबृन्देनेव पयोदनिकुरम्बं तदागमनं प्रतिपालयद्भिः तन्नगरसीमान्ते माकीं क्रोशदशकदूरे विराजमाने विघ्नेश्वरालये पूर्वमेव सज्जीकृतकरितुरगछत्रचामरवाद्यादिबिरुदपूर्णकुम्भमालानालिकेरकदलीफललिकुचफलादिमङ्गलद्रव्यभास्वरस्वकरैः श्रीगुरुचरणागमनमार्गमावृत्य तिष्ठद्भिःनिखिलै रामेश्वरवास्तव्यमहाजनैः तद्देशागतस्य श्रीजगद्गुरुमहास्वामिनः पूर्णकुम्भप्रदर्शनहारसमर्पणपूर्वकं चरणनलिनयोः अकारिषत नमांसि ।

ततः उत्थाय, उत्तप्तचामीकरचारुरुचिपरिहसनपटुतरशरीरशोभाभरेण निजकलेबराच्छादितानल्पामूल्यात्यद्भुतपीताम्बरभास्वरतेजःपुञ्जेन चाच्छादिताखिलदिगन्तप्रदेशं निसर्गनिस्सरत् करुणाप्रवाहार्द्रीभूतदिव्यकटाक्षालंकृतं श्रीजगद्गुरुशिरोमणिमालोक्य क्षणमानन्दसागरनिमग्नाः सर्वेऽपि चित्रलिखिता-इव निष्पन्दावयवाः अस्वाधीनचित्ताश्च बभूवुः ।

गुरूत्तमस्ततो महान्सुचित्तभक्तसंततिं
सुधाझरीकिरत्कटाक्षवीक्षणेन सादरम् ।

निरीक्ष्य पावनां च तां विधाय मोदवारिधौ
न्यमज्जयत्तदा सुधांशुशेखरावतारभाक् ॥ ६ ॥

क्रमेण च महाजनागुरुवरं ज्वलद्दीपिका
सहस्रविलसन्महानगरवीथिमार्गेण ते ।
अनैषुरखिलार्चितं प्रथितरामनाथालय
प्रदक्षिणपुरस्सरं महति सज्जिते सद्गृहे ॥ ७ ॥

तस्मिन्महार्हासनराजमानं
श्रीदेशिकेन्द्रं प्रणिपत्य भक्त्या ।
संतिष्ठते सर्वजनाय सोऽयं
दत्त्वा प्रसादं स्वगृहं ह्यनैषीत् ॥ ८ ॥

अन्येद्युः श्रीभुवनगुरुराट् तत्र विराजमानपुण्यतीर्थेषु यथाविधि स्नात्वा तत्र तत्रागतवैदिकभूसुरबृन्देभ्यः कनकराङ्कवपीताम्बरादिदानेनाल्पितसुरोद्यानाविद्योतमानकल्पमहीरुहः अनन्ततः श्रीरामनाथसंनिधौ देदीप्यमाने सकलप्राणिदुष्कर्मजनितदुरितसंततिनिःशेषनिर्मूलनबद्धकङ्कणे अग्नितीर्थ इति नाम्नैव स्वस्मिन्स्नातानां समस्तपापपलालानां भस्मीकरणे दक्षोऽहमिति स्पष्टमावेदयति प्राच्यां भास्वति पयोनिधावपि विधिवत्स्नात्वा तत्रापि स्वर्णपीताम्बरादीनि समर्प्य वैदिककुलेभ्यः स्वनिवासस्थानमवाप्य श्रीचन्द्रमौळीश्वरपूजायै उपाक्रमत ।

तस्मिन्नेव दिवसे तत्रस्थदेवस्थानप्रधानाधिकारिभिः सादरं श्रीस्वामिदर्शनार्थमागन्तव्यमिति संप्रार्थितः श्रीदेशिकेन्द्रः सायमष्टमघण्टोपरि श्रीरामनाथदर्शनार्थं सपरिवारः बहुशिष्यगणपरिवीतश्च स्वस्थानात्प्रस्थाय देवस्थानाधिकारिभिः पुरः प्रदर्शितसरणिः मन्दं मन्दं श्रीरामनाथालयं आसाद्य महागणपतिदर्शनपूर्वकं श्रीरामनाथस्वामिसंनिधिं आटीकत ।

सर्वेऽधिकारिपुरुषाः बाह्येऽतिष्ठन्निह मण्टपे चान्ये ।
एकान्ते गुरुराजः स्तोतुं श्रीरामनाथमारभत ॥ ९ ॥

स्वाराडादिसुपर्वशेखरमणिं नारायणार्च्याङ्घ्रिकं
वीराग्रेसरमागमान्तरमणी हारायितप्राभवम् ।
पारावारभवं विषं विदधतं भूरादिदाहोन्मुखं
तारानायकशेखरं स्मररिपुं श्रीरामनाथं भजे ॥ १० ॥

जन्तूनां त्वं परमशिवसम्पालनायात्र लोके
संजातो भूः सहजकृपया रामनाथाभिधेन ।
योग्योऽयोग्योऽयमिति भवता चिन्तनां तां च हित्वा
रक्ष्याः सर्वे न हि विमुखता युज्यते स्वीयधर्मे ॥११॥

किं च—

सकलभजनयोग्यं पार्वतीपुण्यभाग्यं
निगमशिरसिमृग्यं योगिबृन्दैकभोग्यम् ।

धनपतिकृतसख्यं देवगोष्ठीषु मुख्यं
भज हृदयसुविख्यं रामनाथाख्यमेनम् ॥ १२ ॥

तस्माद्धिमगिरिवरविरचितसुचरितनिचयपरम्पराया इव मूर्तिमत्याः शारदराकानिशोदयाकृशशाङ्करुचिपरिहसनपटुतरमुग्धनिजमुखारविन्दभास्वरसुन्दरतरमन्दस्मितालंकृतायाः, करुणारसवरुणालयभक्तगणपरिरक्षणचणवीक्षणकोणमनोहरायाः श्रीपर्वतवर्धनीनाम्न्याः सकलभुवनजनन्याः सन्निधिमधिगम्य श्रीशंकरगुरुवरः यथावद्धयात्वा स्तुत्वा च ततो निष्क्रम्य प्रदक्षिणक्रमेण श्रीनटराजादिदेवतादर्शनमपि विधाय चण्डिकेश्वरानुमतिपूर्वकं निजावाससदनं अयासीत् ।

परेद्युः,

यस्य दर्शनमात्रेण मुक्तिरित्युच्यते बुधैः ।
यद्देशगमनाल्लोकाः मुच्यन्ते सर्वपातकैः ॥ १३ ॥

संसारांबुधिमग्नलोकनिवहाः कूलं प्रयातुं परं
जात्यन्धा इव सन्ततं सुसरणेरज्ञानतस्तत्र च ।
कामक्रोधमदादिदुष्टविलसज्जन्तुव्रजैरावृते
कुर्वाणा भ्रमणं प्रयान्ति परमं पारञ्च यत्स्नानतः ॥

दुष्टग्रहाविष्टजना नितान्तं
कष्टं वहन्तो बहुमन्त्रतन्त्रैः ।

श्रमं प्रपद्याधिकमन्ततो य-
देशं गतास्ते सुखिनो भवन्ति ॥ १६ ॥

प्रायश्चित्तशतैरप्यनिर्वर्त्या ये जनार्जिता दोषाः ।
यस्य स्पर्शनमात्रात्कलयन्ति पलायनं स्वयं ते हि ॥

तत्तादृशं सर्वसुखैकहेतुं
श्रीरामसेतुं प्रतियातुकामः ।
प्रस्थाय तस्मात्सहसर्वलोकैः
प्रापाशु तं देशिकसार्वभौमः ॥ १७ ॥

अनन्तरदिने च श्रीमहागुरूदयात्प्राक् स्वेनापि सज्जेन भवितव्यमिति मनीषयेव महोदयपुण्यकालेऽपि झडिति समागते सेतुस्नानकरणमेव महान्विशेषः तत्रापि महोदयपुण्यकाले स्नानं विशेषतरं ततोऽपि जगदाचार्यवर्य श्रीमहास्वामिसन्निधौ स्नानं विशेषतममित्यभिप्रायेण नानादेशसादरसमागतैः जनसहस्रनिचयैः क्षौद्रपटले मक्षिकवृन्दैरिव निरन्तरं कवचिते मार्गे निरवकाशे श्रीगुरुवरोऽपि उषःकालोचितं स्वीयानिखिलनियममपि यथावत् विधाय महता जनसङ्घेन साकं पूर्वमेव श्रीरामधनुष्कोटौ सज्जीकृतं नारिकेलपर्णनिर्मितं अतिपवित्रतमं स्थानमभजत् ।

श्रीगुरूत्तमस्तदा महोदयाभिधे दिने
पूर्वपश्चिमोज्ज्वलत्समुद्रयोश्च सङ्गमे ।
सचापकोटिनामके स्वभृत्यवर्गवेष्टितो
मुहुर्मुहुर्न्यमज्जदात्तकौतुको यथाविधि ॥ १८ ॥

ततः तत्तीर्थमध्यादुज्जीभूतैरिव राजतचूर्णैः अतिपवित्रतमैरच्छाच्छसिकतासमूहैः भासमानं तत्कूलप्रदेशमासाद्य परिगृहीतशुष्कशाट्यन्तरः श्रीजगदाचार्यवर्यः तत्कालोचितं स्वीयमनुष्ठानं विधिवन्निर्वर्त्य तत्र संमिलितानां विद्वन्मणीनां भूसुरनिकराणां यथार्हं कौशेयपीताम्बरकम्बलकनकादीनि बहूनि दानानि कृत्वा अवशिष्टेभ्योऽपि सर्वेभ्यः प्रधानाधिकारिमुखेन बहूनि दानान्यकार्षीत् । एवं श्रीगुरुवरनवमेघवर्षितं सुवर्णादिकमधिगतवन्तः सकला लोका इत्थं स्तोतुमुपाक्रमन्त ।

भोजो नाम पुरा बभूव नृपतिः दाता कवीनां परं
कश्चित्किञ्चिदिति क्वचिद्विलिखितो ग्रन्थे परं दृश्यते ।
लोकाचार्यवराभिधोऽयमधुना भूमौ नवीनाम्बुदः
सर्वेषामपि वाञ्छिताधिकमहो स्वर्णाम्बु संवर्षति ॥

अन्ये च,

महोदय इतीरिते महितपुण्यकालेऽधुना
समस्तकलुषच्छिदि प्रथितरामसेताविह ।

महेशमहिमोज्ज्वलद्भुवनदेशिकेन्द्रान्तिके
विधाय किल मज्जनं तदुचितञ्च लब्धं फलम् ॥

इतरे च,

श्रीकाञ्चिकामकोटीशाः जगद्गुरुवरा इमे ।
महान्तः सर्वदा भान्तु स्वदानाल्पितकल्पकाः ॥

इत्याद्यनेकप्रकारं वर्णितनिजरवमुखरितनिखिलदिङ्मुखाः सकललोकाः श्रीमदाचार्यवर्यचरणसरोजयुगलं प्रणम्य लब्धतदीयदिव्यानुग्रहाः स्वस्वनिवासस्थानमवापुः । श्रीगुरुशेखरोऽपि तस्मान्निर्गत्य श्रीचन्द्रमौलीश्वरसदनं प्रतिपद्य यथाक्रमं पूजोपक्रममतानीत् ।

अथ तत्रैव धनुष्कोटौ स्थित्वा प्रतिवासरं सेतुस्नानपूर्वकं नवरात्रमहोत्सवपूजां सानन्दं सविशेषञ्च विधाय तत्रत्यानां सर्वेषामप्यभ्यधिकां मुदमुत्पादयामास श्रीदेशिकेन्द्रः ।

सारस्वतं पूजनमत्र कृत्वा
परेद्युरस्मात्स महान्गुरूत्तमः ।
निर्गत्य रामेश्वरपूर्निवासि-
लोकार्थितः तत्पुरमाप तूर्णम् ॥ २२ ॥

तत्र स्थितार्यनिकरैः समहाजनैश्च
संपूर्णभक्तिभरितैर्निजशक्तियोग्यम् ।

सर्वैरपूज्यत महागुरुराट् स्वकीय
वाचाझरीभिरखिलान् समतोषयच्च ॥ २३ ॥

तदानीं—

नटेशार्य इति ख्यातः मधुरापुरभूषणम् ।
गुरुपादाब्जसेवायै प्राप रामेश्वरं पुरम् ॥ २४ ॥

सद्यः श्रीगुरुपादवन्दनकृते साकं सुपुष्पैः फला-
न्यदाय प्रथमं निवेद्य तदनुज्ञातस्तदीयान्तिकम् ।
प्राप्तः पुष्पफलानि तत्र च नयन् श्रीमान्नटेशः प्रभुः
साष्टाङ्गं प्रणिपातनं समतनोदानन्दपूर्णान्तरः ॥

श्रीगुरुवरः—प्रणम्योत्थाय सभक्तिश्रद्धं साञ्जलिबन्धं च तिष्ठन्तं तं नटेशार्यं अनवरतनिसर्गनिष्यन्दिकरुणाप्रवाहविराजमाननिजकटाक्षवीक्षणस्य पात्रीकृत्य कोमलतराल्पमन्दस्मितालंकृतमुखारविन्दः 'अपि कुशलम्' इत्यप्राक्षीत् ।

नटेशार्यः—'तत्र भवदव्याजानुग्रहाचरमभाजनीभूतानामस्मादृशानामकुशलमिति वार्तायाः का प्रसक्तिः ।'

गुरुवरः—'किमधुना मधुरात एव आगमनम् ?

नटेशार्यः—'तस्मादेवागच्छामि'

श्रीगुरुवरः—'द्वित्राणि वासराणि सहैव स्थातुं शक्यते वा'

नटेशार्यः—'सर्वदा श्रीमद्भिः साकमेव स्थातव्यमित्येवाभि-

प्रायः तथापि लौकिककर्मपिशाचिकया बलात्समाकृष्टः मदीयाभिप्रायानुसारं श्रीमदाज्ञामनुष्ठातुमशक्नुवन् अपराधीभवामि'

श्रीगुरुवरः—'सर्वेऽपि कर्मवशगा एव तत्रापि बहुजनोपकारपराणां गृहस्थमार्गावलम्बिनां कथं कर्म त्यक्तुं शक्यते? अत एव 'नहि देहभृताशक्यं त्यक्तुं कर्माण्यशेषतः' इति गीताचार्येणापि वर्णितं नात्रापराधलेशोऽपि किं भवत्यन्यो निवेदनीयांशः'

नटेशार्यः—'नास्त्यधिकं निवेदनीयं अथापि किञ्चित् विज्ञापये । बहोः कालादारभ्य तत्र भवत्सन्निधौ असकृन्निवेदितो मदीयमनोरथोऽधुना सफलीकरणीय इति'

श्रीगुरुवरः—'कोऽसौ मनोरथः ?'

नटेशार्यः—

मधुरामधुराकार्या धन्याश्च जनसंचयाः ।
श्रीमतां विजयेनेति या कृता प्रार्थना च सः ॥

श्रीगुरुवरः—तत्रत्याः सर्वेऽपि श्रीमठागमनमभिलषन्ति वा'

नटेशार्यः—प्रायः सोत्सुकाः प्रतिपालयन्ति श्रीमतां विजयम्'

श्रीगुरुवरः— 'श्रीताम्रपर्णीतीरविराजत्पुण्यतीर्थक्षेत्रस्नानदर्शनार्थं गम्यते ; तन्नगरमार्गेणैव प्रयातव्यमिति भाति ; तदानीं तत्र द्वित्राण्यहानि विलम्बनेन भवत्प्रार्थनां सार्थां कुर्मः' इति न्यवेदयत् ।

नटेशार्यः—'अधुनैव धन्योऽस्मि इतःप्रभृति श्रीमद्विजय-यात्रां प्रतीक्षमाणा भवामः ।

श्रीगुरुवरः—'वारद्वयानन्तरमेव तत्रागन्तुं शक्येतेति प्रति-भाति ।'

नटेशार्यः-- 'श्रीमतां सौकर्यानुसारं भवतु' इत्युत्थाय प्राणंसीत् ।

श्रीगुरुवरः—'किमीदानीमेव गन्तव्यं !'

नटेशार्यः—'श्वः अवश्यं तत्र स्थातव्यं साम्प्रतमेव धूमश-कटागमनसमयः श्रीमदाज्ञानुसारं कर्तुं सज्जोऽस्मि ।'

श्रीगुरुवरः—'तर्ह्यधुनैव याहि दीयते प्रसादः ; रे कृष्ण, आ-नीयतां प्रसादः '

कृष्णः—तथा करोति

श्रीगुरुवरः—नाटेशार्यमाहूय तं प्रसादमर्पयतिस्म। सोऽपि गृहीत्वा वन्दनपूर्वकं प्राप्तानुज्ञः स्वनगरमगात्—

रामेश्वरे गुरुवरः स महान्समस्तै-
　　राराधितो दिवसपञ्चकमादरेण ।
श्रीरामनाथपदपङ्कजपुण्यतीर्थ-
　　संसेवनेन समयं गमयेत्समोदम् ॥ २७ ॥

इत्थं कृपाभरजुषा गणपत्यभिख्य
श्रीमद्गुरोर्मृडवधूकरुणाप्तिहेतोः ।
पञ्चापगेशकविना रचितेऽत्र चम्पू-
ग्रन्थे समाप्तिमगमत्स्तबकस्तृतीयः ॥ २८ ॥



# चतुर्थः स्तबकः ।

श्रीगुरुवरः— श्रीसेतुपतिकृतप्रार्थनायाः पूरणविषयेऽयमेव समयः इत्येवं मत्वा ।

संप्राप्य स्वपुरं दिनानि कतिचिन्नीत्वात्र सर्वे जनाः
कार्या धन्यतरा इति प्रकलितां प्राक्सेतुनाथेन च ।
सार्थां कर्तुमिहार्थनां पुरवराद्रामेश्वरात्तत्पुरं
प्राप्यं चेति निजाधिकारिनिकटेऽवादीत्कृपाब्धिस्तदा ॥

प्रातः प्रयाणोचितसर्वकार्यं
सम्यग्विधायाथ मठाधिकारी ।
व्यज्ञापयत्सज्जितमित्यमुष्मिन्
श्रीदेशिकेन्द्रे दिवसावसाने ॥ २ ॥

तत्रस्थसर्वजनतार्थनया कृपालुः
धर्मोपदेशममृतोपमवाङ्झरीभिः ।
कृत्वा जगद्गुरुवरः सकलान्प्रसाद-
दानेन शिष्यनिवहान्समतोषयत्सः ॥ ३ ॥

अन्येद्युरस्मान्नगरान्निर्गत्य गुरुराडसौ ।
अनुद्रुतो भक्तलोकैः रामनाथपुरं ययौ ॥ ४ ॥

तत्र च,

श्रुत्वा लोकगुरूत्तमस्य विजयं स्वां राजधानीं प्रति
　श्रीमान्सेतुपतिः स्वराज्यविलसल्लोकैः समस्तैः सह ।
सानन्दं प्रतिपालयन्बुधवरः तं कृत्यविच्छ्रीगुरुं
　प्रत्युद्गम्य कृतानतिः सविनयं स्वीयां पुरीमानयत् ॥

सोऽपि श्रीभुवनगुरुशिरोमणिः तां नगरीं प्राप्य सम्यक् सकलकार्यनिर्वहणपटुतरेण निजकुलपरम्परागतपूज्यलोकोचित-मर्यादार्पणसंजातयशोऽलंकृतेन, सततारधितपण्डितमण्डलेन सेतुपतिना तेन महीपतिना सादरं संपूजितः पञ्चषादिनानि सानन्दं तत्र उषित्वा तत्रत्यान्सर्वान् परिपूर्णमनोरथान्विधाय तस्माच्छिवगङ्गाभिधं नगरं प्रययौ ।

तत्रापि प्रभुतल्लजेन नितरां सद्भक्तियुक्तेन भूभृ-
　त्कल्पेन च भास्वता मतिमता साकं स्वकीयैर्जनैः ।
आगत्य स्वपुरात्बहिः कृतयथोक्तात्मीयमर्यादया
　लोकाचार्यवरः स सादरमयं नीतः पुरं तन्मुदा ॥६॥

दिनानि खलु पञ्चतद्राचितवर्यशुश्रूषया
　मुदा गुरुवरः प्रभुं शशिकलाधरं पूजयन् ।
स्वसेवनकृतास्थयागतजनान् भृशं तोषय-
　न्नुपादिशदयं स्वयं विमलधर्मसूक्ष्मं तदा ॥ ७ ॥

ततः तस्मान्निर्गत्य मधुरामार्गमध्यस्थक्षेत्रवासिजनप्रार्थनामपि सफलीकरणाय तत्र तत्र क्षेत्रे कञ्चित्कालं विलम्ब्य क्रमेण मधुरानगरसमीपमभजत देशिकेन्द्रः ।

मधुरायामपि तत्रभवान्नटेशार्यः रामेश्वरात्स्वपुरागमनानुक्षणमेव श्रीगुरुवरानुग्रहबलेनावाप्तानन्दः यथाशक्ति अस्मिन् कार्ये प्रयतितव्यम् इदमेवैतज्जन्मनोऽवश्यकर्तव्यं कार्यमिति नैसर्गिकगुरुभक्तिदार्ढ्येन स्वशरीरश्रमं धनव्ययञ्च किञ्चिद्प्यगणयन् श्रीजगद्गुरुमहास्वामिविजयबोधिनीः बह्वीःपत्रिकाः मुद्राप्य सर्वत्र प्रकटीकृत्य स्वयमपि तत्र तत्र गत्वा वाचापि समुचिताधिकारिणे निवेद्य तन्नगरवासिनां तत्समीपग्रामस्थानां सर्वेषामपि महान्तमुत्साहं समुत्पाद्य कदा श्रीमदाचार्यचरणा इमां नगरीं भूषयेयुः, कदा वा तद्दर्शनलाभो घटेतास्माकं, तदीयानुग्रहस्य च कदा पात्रीभविष्याम इति निरन्तरचिन्ताव्याकुलः समस्तैः साकं श्रीजगद्गुरूणां तत्परिवाराणां च निवासयोग्यं स्थानमपि यथोचितं परिकल्प्य सज्जीकृताखिलकार्यः सादरं श्रीमदाचार्यविजयाकांक्षी अवर्तत ।

अस्मिन्समये श्रीमुखशास्त्री गुरुराजशासनात्कश्चित् ।
मधुरां प्राप्य च गुरुराड् विजयं प्रातः करिष्यति श्वोऽत्र ॥

अवदज्जनतामध्ये नटराजार्यस्य चान्तिके स्पष्टम् ।
पीत्वा तद्वचनामृतमभजान्निखिला अमन्दमानन्दम् ॥

अन्येद्युः करिवाहचामरमहाछत्रैश्च पुष्पैः फलैः
हारैराजतपूर्णकुम्भनिकरैः देदीप्यमाना भृशम् ।
सर्वे तत्पुरवासिनः सकुतुकं श्रीवेगवत्यास्तटे
शुद्धाः श्रीगुरुराजपादयुगली संसेवनायै स्थिताः ॥१०॥

श्रीमदाचार्यवर्योऽपि पूर्वदिनरात्रौ घण्टाद्वये प्रस्थाप्य पञ्चम-घण्टासमये निखिलनगरीशेखरीभूतां तादृश्याः महामहिमाञ्चि-तायाः श्रीकाञ्चनमालायाः जन्मान्तरकृतपुण्यपरंपरयेव मूर्ति-मत्या, मञ्जुलमन्दस्मितभासुरनिजमुखारविन्दाच्छाच्छतेजश्छ-टाच्छादिताखिलदिगन्तरया त्रिभुवनविलसल्ललनारत्नललाटतल-तिलकायमानया विगतचञ्चलयेव विद्युल्लतया अद्भुतशरीरया अकृत्रिमवचनकोटिभिरप्यविदितनिजप्रभावया, आजानसिद्ध-करुणाप्रवाहकल्लोलितकमनीयनिजकटाक्षवीक्षणपरिरक्षितभक्त-जनसमूहया, अनादिस्वरूपया, अखिलवन्द्यचारुचरणारवि-न्दया सकललोकजनन्या श्रीमीनाक्षीनाम्न्या परदेवतया कलत्र-वता स्वकीयपद, सरोजयुग, कृतानतिक, नरालिंगत, करालभव, पयोधिभय, निराकरण, विद्यानिपुण, महामहिम, भासुरेण, सकलमुनिजनहृदयकुहर, सततविधृतनिजस्वरूपेण पिष्टविक्रयि-ण्याः कस्याश्चित् वृद्धायाः जन्मान्तरीयातुलभाग्योदयात् पिष्ट-मूल्यग्रहणेन तद्दासभावमङ्गीकृत्य तदीयत्वेन वेगवतीकूले पृथ-क्कृतमृद्भारवहनसमयानुभूतवेत्राहतिना आचण्डालमावेदितस्वी-यभक्तगणपालनविषयसमुपजाततादृशकरुणाप्रवाहेण स्वेनाना-

यासेनाचरितया तादृशचतुष्षष्टिसंख्याकया लीलया प्राकृतानामपि स्पष्टतमं बोधितनिजप्रभावेण, निजविहारहर्म्यायमाणागमनिकरेण चारुतरेन्दुकलालंकृतस्वमूर्ध्ना भगवता श्रीसुन्दरेशेन अनितरनगरसुलभां आत्मीयां शोभामावहन्तीं अमरावतीमिवाश्रितकल्पलतिकां, मेरुस्थलीमिव सद्रत्नभूषितां क्षीराम्भोनिधिमिव परमोत्तमाश्रयां, इन्द्रधनुरिवानेकवर्णोज्ज्वलां, सन्ततसज्जनकृतागममधुरां आदिदंपतिनिवासमधुरां अधिगत्य श्रीवेगवतीनाम्न्याः पुण्यसरितः क्वचित्पावने प्रदेशे कृतावतरणः स्नानादिकं विधाय क्वचिदेकान्ते तत्कालोचितं स्वीयं जपादिकमन्वतिष्ठत् ।

ततः प्रातः सप्तमघण्टासमये समापितनियमः श्रीशंकरगुरुवरः पूर्वमेव सज्जितसकलशिष्यवर्गकृतप्रणामः प्रदर्शितपूर्णकुम्भः कण्ठदेशसादरार्पितानर्घहारः महाशिविकामारुह्य क्रमेण सर्वैरनुगम्यमानः राजवीथीमार्गेण श्रीसुन्दरेश्वरालयं प्रदक्षिणीकृत्य तदालये तत्सन्निधौ विराजमानं कल्याणमण्टपाख्यं महामण्टपं मण्डयांचकार ।

सद्यः सर्वानपि प्रसाददानेनानुगृह्य श्रीचन्द्रमौळीश्वराराधनाय अन्तरयासीत् ।

प्रतिदिनमपि पूजादर्शनायागतैस्तैः
नगरजनसमूहैः पीडिते मण्डपेऽस्मिन् ।

श्वसितुमपि जनानां दुर्लभः सोऽवकाशः
तदपि सततपूजादर्शनं न त्यजन्ति ॥ ११ ॥

पूजावसानसमयेऽनुदिनं सहस्र-
युग्माधिको जनचयो घृतसूपयुक्तम् ।
सव्यञ्जनं सरसपायसभक्ष्यपूर्णं
मोदादभुङ्क्त किल भोजनमर्प्यमाणम् ॥ १२ ॥

द्राक्षामाक्षिकनूतनामृतरुचेः शिक्षाविधौ दीक्षितं
श्रीमद्देशिकसार्वभौमसदुपन्यासोपदेशं मुदा ।
वेदार्थाभिमतं सतां बहुमतं दूरीभवद्दुर्मतं
श्रुत्वाऽऽनन्दपयोनिधौ प्रतिदिनं मग्नाः समस्ता अपि ॥

अपि च ।

स्मृतीरितनरोचितामलसुधर्मसंबोधिनीं
कुधीजनसुधीकृतिप्रथितचातुरीभासुराम् ।
जगद्गुरुवरोद्भवां सरससाधुवाचाझरीं
निपीय सकला जना अतनिषुर्हि सार्थाञ्जनिम् ॥

अथ तत्क्षेत्रविराजमान श्रीमीनाक्षीसुन्दरेश्वरालयप्रधाना-
धिकारिणा समर्यादं श्रीस्वामिदर्शनार्थं प्रार्थितः तत्रभवान्
भुवनगुरुवरः यथासंप्रदायं निर्गत्य प्रथमतो विघ्नेश्वरदर्शनं

विधाय तदनन्तरं बाह्यमण्डप एव विलसत्सकलशिष्यसमूहः श्रीसुन्दरेश्वरसन्निधिं प्राप्य एकान्ते तमेवं प्रार्थयांचकार ।

तथाहि,

यस्मात् सूनशरस्य शक्तिरतुला जातात्मनश्चेत्यहो
मारः नो कलयन् समस्तजगतां नाथेऽपि शंभो त्वयि ।
किञ्चिच्चेष्टितुमुद्यतः स्वयमभून्नाम्नावशिष्टः परं
तादृक्षं परमेश्वरं भवति को वेत्तुं पटुस्त्वां भुवि ॥ १६ ॥

किं च,

लोकानामवनाय पाण्ड्यनृपतेर्वेत्रेण संताडनं
मृद्भारोद्वहनं विषाशनमथो पार्थाहतिस्तादृशी ।
गण्डूषाम्ब्वभिषेचनं दृढशिलाघातः शिवेत्यादिकं
कष्टं प्राप्तवतो ब्रवीमि करुणां किं ते त्रिलोकेश्वर ॥

कृतनतजनरक्षो दग्धमाराख्यकक्षः
कलितगरळभक्षो दत्तदुष्टौघशिक्षः ।
स्ववशगतसमाक्षः पातु मां द्राक् सदक्षो
रविशशिलसदक्षः सुन्दरेशोऽसदृक्षः ॥ १७ ॥

इति संप्रार्थ्य तस्मात् भगवत्याः त्रिलोकजनन्याः श्रीमीनाक्ष्याः संनिधिमधिगम्य तामपि स्तोतुमुपचक्रमे ।

श्रुत्यादिपूज्यवचनान्यपि लोकमातः
स्तोत्रे तवेशि नितरां भयमावहन्ते ।
एवं स्थिते भगवति स्तुतिकर्म तत्ते
कर्तुं कथं प्रभवति प्रथितो बुधोऽपि ॥ १८ ॥

अनादिशुद्धरूपिणीमचिन्त्यशक्तिभासुरां
समस्तलोकपूज्यपादपङ्कजद्वयां शिवाम् ।
महेशवामवासिनीं निशेशभूषणोज्ज्वलां
सुमन्त्रयन्त्ररूपिणीं महेश्वरीं सदा भजे ॥ १९ ॥

नानावेदवनोद्भवासुकृतिना केनाऽपि लभ्यापरं
मानातीतमहातनुर्विदधती ज्ञानाभिधं सत्फलम् ।
दानापास्तसुरद्रुवैभवभरा सेनापतिप्रेमगा
मीनाक्षीति विभाति कापि लतिका सूनायुधारिप्रिया ॥

इति प्रार्थयन् श्रीजगदाचार्यः तस्मान्निर्गत्य प्रदक्षिणपूर्वकं निजनिवासस्थानमभजत् ।

अथ कदाचित् पूर्वसर्वाधिकारी श्रीस्कन्दस्वाम्यार्यः श्रीजगद्गुरुनाथाज्ञया श्रीचन्द्रमौलीश्वरदर्शनाय नातिविलम्बेनागन्तव्यमिति मधुरातः समागतां पत्रिकामालोक्य सद्यः श्रीमहास्वामिवन्दनाय मधुरां प्राप्य श्रीकल्याणमण्डपे विराजमानं श्रीमठमाससाद ।

ततः तत्रस्थसर्वाधिकारिणा समर्यादमाहूतः श्रीमदाचार्यदर्शनाय स एव समुचितः समय इति विज्ञाय तस्मात् श्रीगुरुदर्शनोचितनालिकेरफलाद्यलंकृतपाणिः सभक्तिश्रद्धं गत्वा फलादीनि तत् सन्निधौ समर्प्याविन्दिष्ट । उत्थानानन्तरं श्रीगुरुराट् शिशिरशिशिरेणानुग्रहगर्भितेन निजकटाक्षेण सप्रेम तं निरीक्ष्य कुशलप्रश्नपूर्वकं कस्मादिदानीमागम्यत इत्यपृच्छत् ।

स्कन्दस्वाम्यार्यः—कुम्भघोणनगरादिति व्यजिज्ञपत् ।

श्रीगुरुवरः—भवतः कथंभवत्यवकाशोऽधुना ।

स्कन्दस्वाम्यार्यः— श्रीमतामाज्ञापरिपालने सर्वदाप्यवकाश एव ।

श्रीगुरुवरः—दृढतरगुरुभक्तियुक्तानां वचनमेवमेव भवेत्, तन्नोचितमिति अस्माभिः सौकर्यं सम्यक् ज्ञात्वाऽऽज्ञा दातव्येति पृच्छयते ।

स्कन्दस्वाम्यार्यः— यदा मदीयजन्मान्तरीयभाग्यवशाच्छ्रीमदाज्ञाविषयो भवेयं तदा सर्वमप्यसौकर्यं स्वयमेव पलायेत । अवकाशोऽपि संपूर्णः स्वयमेव सज्जोभवेत् । तदादिश्यतां निःशङ्कं जागरूकोऽस्मि तत्रभवदीयानुग्रहेण यथाशक्त्यनुष्ठातुमिति ।

श्रीगुरुवरः— विजययात्राप्रस्थानात् पूर्वं यत्प्रार्थितं श्रीजम्बुनाथक्षेत्रनिवासिभिः अस्माभिरपि श्रीपरदेवतायाः संकल्पानुगुणं सिद्ध्येदित्युक्तं तादृशं श्रीताटङ्कप्रतिष्ठामहोत्सवकार्यं

भाविवत्सरे पूरणीयमिति श्रीपराशक्तेः संकल्पो भवेदिति प्रतिभाति । तत्कार्यं नातिविळम्बेन कर्तव्यमिति ।

स्कन्दस्वाम्यार्यः— प्रागेव कर्तव्यमिति ममाभिप्रायः । इदानीमेव तस्य पुण्यकालः समागत इति मन्ये । शीघ्रमेव तत्कार्यमेव । तदर्थं मया यदनुष्ठेयमिति श्रीमदाज्ञा प्रवर्तते तां शिरसा वहामीति ।

श्रीगुरुवरः—भवादृशशिष्यमुखेनैव सर्वं करणीयमस्मादृशानाम् ।

स्कन्दस्वाम्यार्यः—लोकक्षेमाय करिष्यमाणस्य एतादृशोत्तमकैङ्कर्यस्यापि अनुपयुक्तेन अनेन शरीरेण किंवा प्रयोजनं पुण्यशालिभिरेव लभ्यमिदं कार्यम् । यतः एकत्र, श्रीपरदेवताकैङ्कर्यम् । अपरत्र, श्रीमहागुरूणामाज्ञा । किमतोऽप्युत्तमं कार्यमस्तीति ।

श्रीगुरुवरः—भवदीयहृदि यद्वर्तते तदनुवदति वागपि कार्यमपि तथैव स्यात् । सर्वेऽप्येवमेव मन्येरन्वा भवतु । आत्मनाथक्षेत्रे प्रागेव कश्चन मुहूर्तो निश्चितः अन्यैरपि ज्योतिःशास्त्रप्रवीणैरङ्गीकृतः स च मुहूर्तः भाविनि चैत्रमासे एकोनसप्तदशदिवस इति ।

स्कन्दस्वाम्यार्यः— मयापि केषांचित् पण्डितानां निकट आलोचितः स एवाङ्गीकृतः ।

श्रीगुरुवरः— तमेव मुहूर्तं निश्चित्य उपक्रम्यतामद्यप्रभृति तत्कार्यायेति । स्कन्दस्वाम्यार्यः निमित्तं सूचयति ।

तथा हि,

सुन्दरसुन्दरघण्टामङ्गळशब्दो निवेदयत्येवम् ।
अखिलाण्डनायिकायाः प्रचलेन्निर्विघ्नमुत्सवं चेति ॥

श्रीगुरुवरः—तयोरेवादिदंपत्योरनुग्रहेण पूरणीयमिदं, केवलं निमित्तमात्रमेवास्मादृशानां प्रयत्नमिति ।

स्कन्दस्वाम्यार्यः—गृहीतः श्रीमहास्वामिनिदेशः शिरसेति प्राणंसीत् ।

श्रीगुरुवरः—सायन्तनानुष्ठानसमय आयात इति प्रसादानयनाय समादिशत् पूजागृहवासिनं; सोऽपि झटिति प्रसादं समार्पयत् ।

श्रीगुरुवरः— निर्विघ्नमेतत्कार्यकरणाय प्रथमतः श्रीचन्द्रमौळीश्वरप्रसादो गृह्यतामिति सानुग्रहमदात् ।

स्कन्दस्वाम्यार्यः—सप्रणामं तं गृहीत्वावाप्तानुमतिः बहिरागतः ।

श्रीगुरुवरः—

अङ्गीकृतार्थवहने कृतसाहसेऽस्मि-
न्धीरे निवेदितमिदं बहुभक्तियुक्ते ।
तत्स्वीकृतं च वचनं कुतुकेन तेन
साहाय्यमस्य करणीयमपेक्षितं च ॥ २२ ॥

इत्यालोचयन्दिनावसानकर्तव्यनियमानुष्ठानाय ययौ ।

इत्थं कृपाभरजुषा गणपत्यभिख्य-
श्रीमद्गुरोर्मृडवधूकरुणाप्तिहेतोः ।
पञ्चापगेशकविना रचितेऽत्र चम्पू-
ग्रन्थे समाप्तिमगमत्स्तबकश्चतुर्थः ॥ २३ ॥



## पञ्चमस्तबकः ॥

---

आचार्येन्द्रसमागमात्प्रभृति स श्रीमान्नटेशो विभुः
त्यक्तस्वीयसमस्तकृत्यमनिशं शुश्रूषमाणो गुरुम् ।
हृद्वाक्कायधनादिभिः प्रभुवरैर्नैजाप्तबृन्दैः समं
प्राप्तश्रीगुरुदिव्यपूतकरुणासत्पात्रतां भक्तिमान् ॥

मुधाकृतसुधाधुनीमहितवैभवां श्रीगुरो-
र्निरर्गळगळद्वचोमधुझरीं निपीयादरात् ।
नितान्तमुदितान्तरः स च नटेशनामा बुधः
निमेषमिव मासमप्यगणयत्तदानीं गतम् ॥ २ ॥

इत्थं स देशिकवरो मधुरापुरेऽस्मि-
न्मासोपरि त्र्यमहानि च पञ्चषाणि ।
नीत्वा बहिर्जिगमिषत्यथ यत्र काले
तत्राभजद्गुरुवियोगजदुःखमेषः ॥ ३ ॥

अथ श्रीजगदाचार्यवर्यः गुरुभक्तिभृतामग्रगण्यं विनयभूषणं देवाजिरावाख्यं निजसर्वाधिकारिणमाहूय, अत्र नगरेऽधिककालविलम्बोऽभूत् । अस्मान्निर्गत्य श्रीदाक्षिणकाशीक्षेत्रादिदर्शनं विधाय त्वरितमेव ताटङ्कप्रतिष्ठामहोत्सवकृते श्रीमदखिलाण्डे-

श्वरीक्षेत्रं गन्तव्यं, तत् श्वः विजययात्रायै सज्जीक्रियतां सर्व-मपीति समादिशत् ।

सर्वाधिकारी—गृहीतं शिरसा गुरुशासनं तथैव झटिति करोमीति प्राप्तानुज्ञो बहिरगात् ।

उत्सवकार्यं कर्तुं प्राप्ता श्रीगुरुवराद्यदाज्ञा सा ।
स्कन्दस्वाम्यभिधार्यस्सन्ततश्चिन्तनापरो ह्यभवत् ॥

ततः शीघ्रमेव श्रीताटङ्कप्रतिष्ठामहोत्सवाय पत्रिका मुद्राप्य सर्वतो बहिः प्रकटनीया इति श्रीमहास्वामिसन्निधौ निवेद्य तदनुग्रहपूर्वकमस्मात् कुम्भघोणनगरी प्राप्येति निश्चित्य स्कन्दार्यः श्रीमदाचार्यचरणमूलमभिगम्य कृतप्रणामः सविनयमतिष्ठत् ।

श्रीगुरुवरः— अस्ति वा निवेदनीयांशः ।

स्कन्दस्वाम्यार्यः—प्रकृतमहोत्सवाय त्वरितं पत्रिकामुद्रापणादिकार्यं करणीयमिति भाति ।

श्रीगुरुवरः—अत्रस्थसर्वाधिकारी आहूयतामिति ।

सद्यस्तत्रत्येन समाहूतः सर्वाधिकारी वेगेनागत्य प्रणिपत्य उत्थाय सप्रश्रयं श्रीमदाचार्याज्ञां प्रत्यपालयत् ।

श्रीगुरुवरः—

वर्षे भाविनि चैत्रमासि सुदिने ताटङ्कभूषोत्सवो
देव्याः कार्य इतीह निश्चितमतः स्कन्दार्य एषोऽत्र च ।

किं किं पत्रिकया निवेदयति नः द्राक् तस्य तस्योचितं
कर्तव्यं प्रतिपत्रिकापि सपदि प्रेष्या हि तस्मै त्वया ॥

सर्वाधिकारी—सज्जोऽस्मि यथाशक्त्यनुष्ठातुं श्रीमदाज्ञां ।

स्कन्दस्वाम्यार्यः—ममाप्यनुज्ञा दातव्येत्यर्थये । इतःपर-मस्मान्निर्गत्य श्रीमठेऽभिमानिनां सर्वेषामपि पत्रिकया साक्षाच्च तत्तत् कार्यनिर्वहणाय पूर्वमेव निवेदनीयमिति ।

श्रीगुरुवरः—क्रियतां तथैव; वयमपि इतः दक्षिणकाशीपर्यन्तं विराजमानतीर्थदेवतास्नानदर्शनादिकं विधाय चैत्रमासोद्दिष्ट-दिवसेऽवश्यं तत्रागच्छामः; असकृन्निवेद्यतामनुष्ठीयमानं कार्य-जातमिति आज्ञाप्य चेन्नपुरवासिना श्रीमठीयकार्यनिर्वहण-समर्थेन रामशेषार्येण साकं तस्य प्रसादमदात् । उभावपि सप्रणामं गृहीतप्रसादौ श्रीगुर्वाज्ञां प्राप्य तस्मात्त्रिशिरःपुरम-भजताम् ।

सद्यः श्रीपरदेवतोत्सवकृते मुद्राप्य ताः पत्रिकाः
आसेतोरपि चाहिमाचलतटं सर्वत्र संप्रेष्य च ।
ग्रामायान्तिकभास्वरायगुरुराट्शिष्यव्रजाढ्याय च
स्कन्दार्यः स जनान्बहून्स्वलिखितैः पत्रैः सह प्राहिणोत् ॥

सर्वोत्सवेषु प्रभुतल्लजेभ्यो विधाय याच्ञां सकलैश्च पूर्णम् ।
यो भोजनं वर्णचतुष्टयानां समर्पयत्यादरतः स्वयं महान् ॥

श्रीकुम्भघोणनगरान्तिकराजमान-
ग्रामस्थिते शिव इति प्रथिताभिधेये ।
तस्मिन्न्यवेदयदयं गुरुशासनेन
देव्युत्सवः प्रचलितेति च चैत्रमासे ॥ ८ ॥

स्कन्दार्यवर्णितमिदं वचनं समोदं
श्रुत्वा शिवः स्वयमिदं वचनं जगाद ।
तस्मिन्समागतजनव्रजभोजनं त-
द्दातुं प्रयत्नमधुनैव करोमि नूनम् ॥ ९ ॥

एवं शिवोदितं शिवंकरं वचनं निशम्य प्रमुदितहृदयः स्कन्दार्यः साक्षादेवावश्यं द्रष्टव्यान् प्रभुवरानालोक्य सकलमपि विषयं तेषां निकटे निवेद्य सद्यः त्रिशिरःपुरमागत्य श्रीजम्बुनाथक्षेत्रभास्वरनूतननिर्मिते श्रीजगद्गुरुमहास्वामिनां मठे श्रेष्ठविनायकपुरवासिनं श्रीजगदाचार्यवर्यचरणसरसिजाव्याजभक्तियुक्तं निखिललौकिकवैदिककार्यनिर्वहणनिपुणं स्कन्दस्वाम्यार्यस्य मित्ररत्नं सत्यसन्धं सद्गुणगणालंकृतं प्रभुवरं वैद्यनाथनामानं भूसुराशनशिरोमणिं स्थापयित्वा सकलान्यपि तत्र करणीयानि महोत्सवकार्याणि तस्मिन्निवेश्य स्वयं सर्वतो विहरन् क्रमेण सर्वमपि सज्जीचकार ।

श्रीमदाचार्यसार्वभौमोऽपि मधुरानगरात् प्रस्थाय मध्येमार्गं तत्र तत्र स्थितैः आस्तिकशिष्यसमूहैर्यथाशक्त्युपास्यमानः

श्रीदक्षिणकाशीक्षेत्रं प्रतिपद्य तत्र गिरौ भासमाने दर्शनमात्रेण महानन्दजनके निजस्पर्शनिवारितनिखिलरोगे अच्छाच्छे अतिशीतले सन्ततसमस्तजनतासेव्यमानेऽसमाने पावनतरे निर्झरे सानन्दं निमज्ज्य तद्गिरिमूले देदीप्यमानं भगवन्तं इन्दुशेखरं तद्वामाङ्कविभूषणां वामामपि च निषेव्य दिनत्रयं तत्र न्यवसत् ।

ततः क्रमेण पापविनाश, कलुडक्कुरुचि, शालिवाट्यादीनि क्षेत्रवराणि तत्तन्निवासिलोकनिवहप्रार्थनानुसारमलंकृत्य पश्चात् मधुरामार्गेण षण्मुखविषेविषया श्रीफलिनीगिरीशमाजगाम ।

तत्र भूधरवरे, भास्वन्तं आपण्डिताज्ञजनषण्डेभ्यः सम्यक् प्रकटीकृतनिजमहिमानं तत्तल्लोकलषिताखिलैहिकामुष्मिकश्रेयोविधानदीक्षितं अनवरतागतविबुधनिकरवन्द्यमाननिजचरणारविन्दद्वन्द्वं अद्भुतविग्रहं आसेचनकमक्ष्णामम्बिकाप्रियकुमारं संसेव्य एवं स्तोतुमपाक्रमत ।

भक्तिं येऽभिनयन्ति बाह्यविधयाप्यल्पीयसीं सादरं
तेषां सर्वमनोरथार्पणविधौ जागर्ति यः कौतुकात् ।
स्वामिन् श्रीफलिनीगिरीश गिरिजाप्रेमास्पद त्वं विभो
स्वाभाव्येन कृपाभरेण भगवन् सेनापते पश्य माम् ॥

कृतामरसुतोषणं नतजनार्तिसंशोषणं
बलारिकुलभीषणं श्रुतिशिरोविहारेषणम् ।

गिरीशकृततोषणं तनुजितोल्लसत्पूषणं
कुमारगिरिभूषणं बुधवरं भजे षण्मुखम् ॥ ११ ॥

तिष्ठत्सु दैवतगणेष्वखिलेषु दान-
दक्षेषु पीडयति मामिति लोक एषः ।
श्रीमन्कुमार भगवन् कुप मा दयाब्धे
कोऽन्यो झटित्यभिमतं त्वदृते ददाति ॥ १२ ॥

पूर्वोपात्तैः सुकृतनिचयैः केवलं दर्शनीयः
शाखावृन्दप्रकटितलसद्वैभवः शैलराजे ।
स्कन्दाख्योऽसौ विलसति तरुर्भक्तिभाजामपूर्वं
सर्वाभीष्टप्रदमिह फलं सन्ततं यो ददाति ॥१३॥

रोगादिसर्वविपदो जनतास्थिता-
स्त्वमुन्मूल्य वाञ्छितसुखान्यखिलानि सद्यः ।
दातेति निश्चययुता इह कार्तिकेय
त्वां प्राप्नुवन्ति भगवन् सततं दयाब्धिम् ॥ १४॥

तत्रोषित्वा दिनत्रयमविन्ददवाङ्मनसगोचरमानन्दम् ।

निर्गत्यास्माद्विशालं पुरमपि नवसालाभिधं प्राप्य भूप-
श्रेष्ठेन प्रोज्ज्वलेनानिशगुरुचरणाम्भोजसद्भक्तिभाजा ।

लोकैश्चाराधितोऽयं भुवनगुरुवरस्तत्र नीत्वा दिनानां
चत्वारि प्रातनिष्ठामृतसमसदुपन्याससन्तोषिणस्तान् ॥

ततः दृढतरगुरुभक्तियुक्तं तत्पुरसमीपभासमानं ग्रामं भूषयता केनचिदाढ्येन श्रेष्ठिना प्रणामपूर्वकं सादरमाहूतः श्रीभुवनगुरुसार्वभौमः तदीयप्रार्थनामपि सार्थयित्वानन्तरं श्रीताटङ्कप्रतिष्ठामहोत्सवकृते श्रीजम्बुनाथक्षेत्रं प्राप्तुं प्रस्थितः कीरनूर्ग्राममार्गेण त्रिशिरःपुरस्य क्रोशदशकदूरे भास्वन्तं मात्तूराख्यं ग्राममभजत् ।

श्रीदेशिकेन्द्रो नवसालपट्टणं समागतो द्रागिह यास्यतीति ।
ज्ञात्वा समस्तास्त्रिशिरःपुरस्थाःश्रीरङ्गपूर्गाश्च सभामकार्षुः ॥

तत्र सभायां त्रिशिरःपुररंगनाथक्षेत्रवासिषु ये प्रधानाः निसर्गभवश्रीमदाचार्यचरणातुलभक्तिभास्वरा आस्तिकाश्च विराजन्ते ते सर्वेऽपि समागत्य, श्रीगुरुवरः त्रिचतुर्दिनादर्वाक् श्रीताटङ्कप्रतिष्ठामहोत्सवाय समागमिष्यतीति पूर्वमेव मठीयश्रीमुखशास्त्रिमुखात् श्रुतम् । अधुना पुनः श्रीमठीयसर्वाधिकारिणा प्रकटितया प्रसिद्धपत्रिकया अस्मिन् चैत्रमासि भावि सोमवारे एकाधिकनवमदिने सायं पञ्चविंशतिघटिकासमये इमां पुरीं भूषयिष्यतीति स्पष्टं विज्ञायते । अतः तत्काले सर्वे वयं अस्मिन्नगरसीमनि सज्जीभूत्वा यथाभक्ति, यथाशक्ति शिष्यधर्मोचितया मर्यादया तान् सादरं प्रणिपत्य श्रीगुरुवरेण साकं क्रमेणागत्य श्रीजम्बुकेश्वरक्षेत्रे विलसन्तं श्रीमठमधिगत्य

तत्र शिबिकातोऽवरुह्य महासिंहासने भासमानं श्रीमहास्वामि-
नं नमस्कृत्य गृहीतप्रसादाः अनन्तरदिवसेष्वपि यत् कर्तव्य-
त्वेनादिश्यते तत्सर्वं कर्तव्यमित्येकाभिप्रायेण निश्चित्य तथैव
पत्रिकयापि सर्वत्र नगर्यां प्रकटीकृत्य सादरं श्रीजगद्गुरुमहा-
स्वाम्यागमनसमयाकांक्षिणो बभूवुः ।

आचार्यागमनाय निश्चितदिने प्रातः प्रभृत्यादरा-
द्रम्यैर्भूषितमापणैर्जनचयैरध्यासितं तादृशम् ।
मार्गं योजनदूरकं च सकला लोका अलंचक्रिरे
द्रष्टृणां हृदयाभिकर्षणविधौ दक्षं यथा स्यात्तथा ॥

तथाहि,

श्रीगुरुचरणैः सहागच्छतां जनचयानां परस्परं दृढतर-
संघर्षणेन तापो माभूदिति नीरपूरस्नापितस्वस्वसदनपुरोभाग-
स्थविषयः चारुतरहरितपत्रावलिकपिशफलनिचयालंकृतमोचा-
चयकवचितनिजागारबहिर्द्वारोभयपार्श्वाः गारुत्मतरत्नमरी-
चिजालविजयपटुतरचूतस्तबकभूषिताभिः उत्तप्तचारुकनकका-
न्तिपरिहसनपण्डितानेकविचित्रकर्मरचनामनोहरनालिकेरताळ
बालपत्रनिर्मिताभिःतोरणमालिकाभिः निरन्तरपिहिताका-
शावकाशाः प्रतिगृहं बहुविचित्रपटमण्डितासमानहूयमान-
कायमानभासमानबाह्यद्वारान्तिकस्थभूम्युपरिभागाः श्वेतनील-
हरितशोणमुखनानारत्नमयूखपुञ्जानि विकिरन्तीभिः विद्युत्ख-
ण्डनिर्मिताभिरिव स्वच्छतरं प्रकाशयन्तीभिः दीपावळिभिः

श्रीलोकगुरुसार्वभौमः समागमिष्यति नेदानीमत्र पुरे अन्धकारलेशस्याप्यवकाशो दातव्य इति बहुदूरोत्सारिततमोबृन्दाश्च क्वचिन्नानावर्णविराजमानकाकळीनिर्मितविचित्रदीपभूषितसौध बृन्दाः। अन्यत्र सादरनिजकरकमलकलितमञ्जुळचामरराजतदीपादिकसारङ्गनयनारूपसालभञ्जिकादेदीप्यमानसदनबाह्यद्वारोभयपार्श्वविराजमानकुट्टिमाः कुत्रचिदन्तस्थितकूपनिर्मितयन्त्रविशेषव्यापारेण बहिर्वेदिकास्थाप्यमानकृत्रिमवारविलासिनीपाणिपयोरुहभास्वरगन्धाम्बुसेचनसमर्थाच्छाच्छरजतनिर्मित यन्त्रेभ्यः निखिलाश्चर्यकरं किमिदं कस्मादेवमागच्छतीत्यज्ञाततत्वं क्रोशद्वयावधिसन्ततप्रसारितसामोदशिशिरसूक्ष्मनीरशीकरकदम्बानन्दितजनसन्दोहाः अन्यान्यपि बहूनि विचित्रकर्माणि विधाय द्रष्टृणां स्वर्गलोक एव श्रीजगद्गुरुचरणसिषेविषयात्र समागत इति मतिमुत्पादयन्तः सर्वेऽपि तन्नगरवासिनः श्रीलोकगुरुपरमाचार्यदर्शनाकाङ्क्षिणः सादरं समयं प्रतिपालयन्तिस्म ।

तादृक्पट्टणवासिलोकनिवहेष्वग्र्याः समस्ता अपि
श्रीमल्लोकगुरूत्तमागममिमे भक्त्या प्रतीक्ष्यादरात् ।
रम्ये शीतकरस्य तत्र दिवसे सज्जाश्च घण्टात्रये
ह्यारामे गुरुसेवनोचितफलस्रक्पूर्णकुम्भादिभिः ॥१८॥

श्रीमज्जगद्गुरुवरं समये च क्लृप्ते
सर्वैः स्वभृत्यनिवहैः क्रमशोऽभियान्तम् ।

सज्जा समस्तजनतापि निरीक्ष्य तस्य
पादाम्बुजातयुगळे प्रणतिं ह्यकार्षीत् ॥ १९ ॥

ततश्च स गुरूत्तमोऽप्यमृतपूरनिष्यन्दिभि
र्जनैः सुकृतशालिभिः सुलभतः प्रलभ्यैः शुभैः ।
समीक्ष्य शिशिरैः समानपि जनान्कटाक्षैर्निजै-
श्चकार किल पावनान्विमलधीः स्वाशिष्यान्तदा ॥

अनन्तरं श्रीदेशिकेन्द्रः शिबिकातोऽवरुह्य तत्रारामे मनो-
हरे पवित्रतरे क्वचित्प्रदेशे सज्जीकृतं सिंहासनमलमकार्षीत् ।

सद्यः केचिदुपायनानि लिकुचश्रीनारिकेळाम्रस-
न्मोचारम्यफलादिमानि गुरुराट्पादे निधायानमन् ।
हारेणोत्तमपुष्पगेण च परे तत्कण्ठमाभूषय
न्ध्यात्वा दिव्यतदीयमूर्तिमितरे चानन्दमापुः परम् ॥

इत्थं सार्धपञ्चमघण्टापर्यन्तं तत्रागतानां प्रभुमणीनामन्येषां
च निजदर्शनदानेन सरसतरसल्लापेन चामन्दमानन्दमुत्पाद्य सद्यः
स परमहंसशेखरः तत्कालोचितानुष्ठानाय तत्रैवान्तिके राज-
मानं अच्छाच्छनीरपूरितं मंजुलं पल्वलमयासीत् ।

सद्यः समस्ताः प्रभवः समोदं
श्रीलोकगुर्वानयनाय सज्जिताम् ।

छत्रादिमां तां बिरुदावलिं द्रुतं
यथाक्रमं संव्यभजन्तदैवम् ॥ २२ ॥

तथाहि,

अस्मत्प्रभुः श्रीचन्द्रशेखरः श्रीशंकरभगवत्पादरूपेणावनिमवतीर्य उत्तप्तचामीकरकान्तिकचाकचिप्रथनबद्धकङ्कणलावण्यभूषितदिव्यनिजशरीरदर्शनदानेन सर्वानपि धन्यीकरोति अहमपि स्थूलमिदं कलेवरमनेकधाविभज्य तादृशपुण्यमूर्तिसेवनेन पवित्रीकरोम्यात्मानामिति कलितनिश्चयेन कैलासाचलेनानेकधा स्वीकृताभिः तनुभिरिव भासमानाभिः कान्तदीपसन्ततिभिराभितः सरणिमभिमण्डिते छत्रचामरमकरतोरणादिविचित्रतरनानाविधबिरुदनिकरालंकृतोभयपार्श्वे मत्तकरिनिवहवाहसमूहपरिशोभितपुरोभागे धीरतरपुरुषसमोद्वाद्यमानैः ठक्काडमरुडिण्डिमशंखपटहप्रमुखमङ्गलवाद्यकदम्बैर्बाधरीकृतभुवनत्रये, तञ्जापुरविराजमानमञ्जुलवाद्यपुञ्जवादनानुरञ्जितजनसञ्चये, प्रागेव मुद्रितपत्रिकाद्वारा सर्वत्रापि निवेदिततया श्रीजगद्गुरुचरणसरसिजसेवनपरसकुटुम्बसरभससमागतसकललोकसङ्घनिबिडितमध्यप्रदेशे सङ्घपरिरक्षणार्थस्थापितागतराजकीयप्रधानाधिकारिवृन्दविरचिताज्ञापरिपालनबद्धकङ्कणसततभ्रमद्राजकीयसेवकसहस्रविरलीक्रियमाणजनसमूहे अत्यद्भुतवेषभूषितैः तत्तद्स्थोपरि विद्योतमानैः श्रीमठीयराशिवकैरभिमण्डितपुरोभागे श्रीभगवत्पादपादपयोरुहाव्याजभक्तियुक्तैः भागवतमूर्धन्यैः स्वगोष्ठीभिः साकं तत्तात्तालमृदङ्गादिवाद्यविशेषैः सह गीते-

नव्यसुधारसवर्षिभिः श्रीपारमेश्वरपुण्यकथाप्रबन्धैर्हर्षिताखिल-लोकमानसे, उपनिषत्पारायणपरायणवसुधागीर्वाणशिरोमणि-गणनिबिडितैकदेशे, श्रीगुरुचरणगमनमार्गे सकलसन्नाहैः स-ज्जीकृते समापितनिखिलानुष्ठानः आपादमस्तकं कवचीकृतविम-लपावनविभूतिप्रभावधवलिताखिलदिङ्मण्डलः कलिदोषकलुषित-लोकहृदयेभ्यो बहिरागतया अनन्यशरणया स्वीकृतवर्तुलानेक-ह्रस्वशरीरया कलिना विद्रुतया भीतभीतया निजावनायालि-ङ्गितकण्ठया मन्त्रगुणपरंपरयेव भास्वरया निर्मलया स्फाटिक-मालिकया रुद्राक्षमालाभिश्च प्रकाशितकण्ठदेशः अदृष्टपूर्वाप्र-तिमानर्घपीतांबरावकुण्ठिताखिलकलेबरः अनुष्णकिरणः आस्था-गृहीतमानुषविग्रहः सहस्रदीधितिरिव देदीप्यमानः श्रीजगद्गुरु-परमाचार्यवर्यः तस्मान्निर्गत्य पार्श्वयुगलविलसच्छिशिरःपुरश्रीर-ङ्गनाथक्षेत्रनिवासिप्रभुवरशिष्यवर्गैः विना जनसंबाधं सन्द-र्शितसरणिः मन्दंमन्दमागत्य पूर्वमेवालंकृत्य सन्नद्धां दन्त-शिबिकां समारुरोह ।

सकलजनसमूहं राजकीया ब्रुवन्तो-
ऽप्यतिदृढनिजशब्दैर्गच्छगच्छेति तूर्णम् ।
भुवनगुरुकटाक्षाकाङ्क्षया भक्तिपूर्णः
पदचलनमपि स्वं नाचरत्यत्र काले ॥ २३ ॥

तत्राहक्षामतुलशिबिकां भासमानां सुमेरो-
रच्छच्छायं शिखरमिव संभूषयन्देशिकेन्द्रः ।

शिष्यव्रातैः कुतुकभरितैरावृतैः स प्रतस्थे
मन्दंमन्दं महितचरितो जम्बुनाथस्य पुर्यै ॥२४॥

एकीभूतैर्जलधिनिवहैर्दर्शनेनेव चेन्दोः
लोकव्राजैर्गुरुवरसमालोकनाय प्रवृद्धैः ।
पन्थानं तं निबिडितमसौ मन्दमुल्लङ्घ्य रम्यां
सर्वैः पूर्णां तदनु महतीं पण्यवीथीमयासीत् ॥

गुरुवरपदसेवालोलुपा अप्यशक्त्या
निबिडितजनसङ्के भीतियुक्ताः प्रयातुम् ।
निजनिजगृहसौधे जागरूकास्तदानीं
सरभसमवदंस्ता योषितोऽन्योन्यमेवम् ॥ २६ ॥

तथाहि,

अयि मुग्धे क पश्यासि अत्र दक्षिणस्यां दिशि समालोकय, हे सुन्दरि, एतावति वाद्यशब्दकोलाहलेऽपि कथं स्वपिषि, जागृहि, उत्तिष्ठ झटिति, अयि मञ्जुभाषिणि, तव विनोदालापस्य नायं समयः, हे मन्दगमने गतिविन्यासोऽधुना माभूत् त्वरितमायाहि, मदनमञ्जरि तवालंकारसमाप्तेः प्राक् आचार्यवर्यः स्वास्थानं गच्छेत् अलमलमलंकारेण आगच्छ शीघ्रं, अयि कान्तिमति, किमर्थमधुना निद्रान्तं द्विहायनं बालकमुन्मीलनाय हिंसयसि, हे मीनलोचने तूष्णीं क्षणमास्व नाधुना तव कुटुम्बकलहवार्ताश्रवणाय मेऽवकाशः, रे निर्लज्जे विशा-

ल्लाक्षि, बधान सम्यक् कञ्चुकं, भो गौरि तव समीपे ममापि स्थातुमेकं स्थानं सज्जीकुरु, हे कनकाङ्गि मान्तत्रय तव सुतं निदाघमेघध्वनिनिभेन रोदनरवेण भिनत्ति नः सर्वासां कर्ण-पुटानि, सखि सरस्वति दशजनोपवेशनयोग्यं स्थानं त्वमेकाकी कथं रुणद्धि दीयतामवकाशः, हे चम्पकलते कथं मुक्तकेशी भवति भवती मङ्क्षु कुरु केशपाशबन्धनं, आर्ये विद्युत्प्रभे कटि-तटादधः गलितमपि वस्त्रं किं न जानासि इत्याद्यनेकव्यवहार-जातशब्दजालपूरितमासीदखिलमपि दिङ्मण्डलम् ।

एवं तत्पुरवासिलोकनिवहे कौतूहलाज्जाग्रति
श्रीमद्देशिकवर्यपादजलरुट्संसेवने सर्वतः ।
आचार्योऽपि तदा समस्तबिरुदैर्वाद्यैरनेकैस्तथा
दीपैर्मञ्जुतमैरगाद्विपणिकावीथिं भृशं भास्वरः ॥२७॥

केचिद्गुरूत्तमपदे महितं दुकूलं
पीतांबराणि च परे कुतुकात्समर्प्य ।
कर्पूरक्लृप्तविमलप्रभदिव्यदीपै-
राराध्य तं समभजन्गुरुराट्प्रसादम् ॥ २८॥

क्रमेण सकलैर्जनैः परिवृतो जगद्देशिको
विलङ्घ्य विपणिं ततः पथि च तत्र तत्रादरात् ।
जनैः स परिपूजितो महति जम्बुनाथस्थले
स्थितं मठमगान्मुदा जितसुरेशसद्मश्रियम् ॥ २९ ॥

सद्योऽवरुह्य गुरुराट् शिबिकात एष
प्रागेव क्लृप्तमतुलप्रभमासनं तत् ।
यावद्व्यभूषयत तावदशेषलोका
आनन्दपूर्णहृदयाः प्रणतिं व्यकार्षुः ॥ ३० ॥

आनम्योत्थितमादृताञ्जलिपुटं शिष्यव्रजं सादरं
तत्तादृक्करुणारसार्द्रितलसत्पूतात्मदृष्ट्या प्रभुः ।
वीक्ष्य श्रीगुरुशेखरः समकरोत् धन्यं प्रदानात्तदा
श्रीमच्चन्द्रविभूषणस्य सुकृतप्राप्यप्रसादस्य हि ॥३१॥

आचार्यवर्यशशिशेखरयोः प्रसाद-
माप्याखिलाः प्रमुदिता अभजन्स्वगेहम् ।
श्रीमज्जगद्गुरुवरोऽप्यथ चात्मकृत्यं
ध्यानादि कर्तुमगमाद्विजनं प्रदेशम् ॥ ३२ ॥

इत्थं कृपाभरजुषा गणपत्यभिख्य-
श्रीमद्गुरोर्मृडवधूकरुणाप्तिहेतोः ।
पञ्चापगेशकविना रचितेऽत्र चम्पू
ग्रन्थे समाप्तिमगमात्किल पञ्चमोऽयम् ॥३३॥



## षष्ठस्तबकः ॥

—*—

क्षेत्रे वसन्तोऽत्र च जम्बुनाथ-
पूजारताः आर्यजनाः समस्ताः ।
अवाप्य गुर्वन्तिकमादरेण
प्रणम्य लब्ध्वास्तदनुग्रहं परम् ॥ १ ॥

ततः सकुतुकाः समे प्रथितजम्बुनाथालयं
प्रपद्य विधिवत्क्रियां परिसमाप्य पूर्वां ततः ।
परां च महतीं क्रियां कलयितुं यथावत्क्रमात्
ययुर्यजनवाटिकां निखिलवस्तुपूर्णां शुभाम् ॥ २ ॥

अपेक्षितं यदा यद्यत्तेन तेन प्रपूरिताम् ।
यागशालामवाप्यैते चारभन्त यथाविधि ॥ ३ ।

आमकरमासादारभ्य सर्वत्र पत्रिकया प्रकटिततया ऋग्यजुः सामाख्येषु निगमेषु तत्तदवान्तरशाखासु च ये ये प्रवीणा श्रीचेन्ननगरप्रान्तात् आचरामसेतोः आपश्चिमोदधेः आचकलिकातानगर्याः राजमानग्रामनगराण्यालङ्कुर्वन्ति, ते सर्वेऽपि श्रौत्राहन्तीचणाः सानन्दं श्रीगुरुवरचरणसेवनास्थया समागमन् ।

प्रत्येकं निपुणैः परीक्षणविधौ क्लृप्तैर्महापण्डितै-
र्मर्यादापरिपालनाय निगमे प्रष्ठ मनाक् कुत्रचित् ।
सम्यक्केचिदत्वादिषुः पटुधियस्तस्मिन्घनान्तं तथा
केचित्तत्र पदान्तमूचुरपरे चाहुः क्रमान्तं तथा ॥ ४ ॥

एवं परीक्ष्य मिलिता निगमेषु योग्याः
साहस्रसंख्यकबुधा जपकर्म कर्तुम् ।
द्वेधा विभज्य निहिताः शशिशेखरस्य
तद्योषितश्च महिते किल सन्निधौ ते ॥ ५ ॥

तर्के व्याकरणे च जैमिनिकृते तन्त्रे च वैयासिके
वेदाङ्गेषु परेषु च स्फुटतरप्रज्ञाविशेषोज्ज्वलाः ।
काव्यालङ्करणेषु चारु सदुपन्यासेषु दक्षाः परं
विद्वांसः समभूषयन्निह बहवः क्षेत्रं तदत्यद्भुतम् ॥ ६ ॥

यत्र यत्र स्थिता देशिकेन्द्रे भृशं
भक्तियुक्ता जनाः शिष्यभूताः स्वयम् ।
आगतैः सादरं चाखिलाण्डेश्वरी
क्षेत्रवर्यन्तदातैरभूत्संकुलम् ॥ ७ ॥

पूर्वमत्र श्रीजगद्गुरुसार्वभौममहितानुग्रहपात्रीभूतः श्रीपरदेवतानाटकपरिष्करणाय स्वीयप्रार्थनानुरूपं देशिकेन्द्राद्गृहीतानुमतिः सदाशिवठाकरभिन्नः महीसुधाशनतिलकः श्वेतनील-

हरितारुणादिनिर्दोषानर्घरत्नवरनिकरविरचितेन सन्तताचञ्चल-
वर्तुलविलसद्विद्युत्ततितेजश्छटापरिहसनचञ्चद्दीक्षेण भवदीय इत्य-
विजानता मूढमतिना मत्सुतेन भ्रमेण मुनिकुमारे कृतचेष्टाया
अनुरूपं फलमलंभि इतःपरं जागरूकेण भवितव्यमिति सम्यक्
मयापि शिक्षितः हे देवि करुणानिधे तव भर्तुर्निकटे सुसमये
निवेद्य विहाय कोपं तच्चरणपरिचर्यापरान्यतमत्वेनायमपि स्वी-
करणीय इति रहसि श्रीपरदेवताकर्णयुगळे कथयितुमागतेनेव
दिनोदयराजमानराजीवजीवातुबिम्बेन श्रीचक्ररूपताटङ्ककवच-
द्वयेन साकं सपरिवारः समागत्य श्रीगुरुचरणसन्निधौ प्रणाम-
पुरस्सरं तत्ताटङ्कभूषणं समार्पिपत् ।

प्रभातभानुभानुनायुतां निशेश्वरत्विषं
परीहसन्निजप्रभाभरेण भूषणं वरम् ।
महेश्वरीपदोत्थभक्तिमस्य बोधयद्दृढां
विलोक्य लोकदेशिकोऽभजन्मुदं परां विभुः ॥

सद्यो यथा विधिपरिष्करणीयशेष-
कृत्यं प्रसिद्धविदुषाशु च कारयित्वा ।
श्रीचन्द्रमौळिसविधे शुभदे मुहूर्ते
कृत्वार्चयद्गुरुवरः किल भूषणं तत् ॥ ९ ॥

शिवेन च यथा पुरा प्रथितकीर्तिनाङ्गीकृतं
तथा सकलवस्तुभिर्नवनवागतैः पूरितम् ।

अवाप्य सदनोत्तमं स कुतुकं प्रदत्तं तदा
समागतजनालये सुरुचिरं महद्भोजनम् ॥ १० ॥

आदराद्धोकुलोकान्तिकं सागत-
श्लाघ्यभक्ष्यादिकं खादखादेति च ।
यावदिष्टं ददौ कष्टतो मामके-
त्याहुरास्थाभृतोऽप्याशु पूर्णोदराः ॥ ११ ॥

सर्वांश्च वर्णानपि तत्र काले
मृष्टान्नदानेन विभुः शिवोऽसौ ।
यथेष्टमाराध्य भृशं ह्यतोषय-
न्नवर्णमेकं न कदापि मेने ॥ १२ ॥

दिनमनुसनियमजपपरभूसुरनिकरस्य पण्डितानां च ।
पावनभोजनदानं कार्यं मठ इति गुरूत्तमाज्ञातः ॥१३॥

तत्ताहक्गुरुसार्वभौमविलसच्छ्रीमन्मठेऽप्यादरा-
दाप्रातर्दिवसावसानसमयं चारात्त्रिघण्टैककम् ।
ये ये यद्यदपेक्ष्य भोजनकृते शास्त्राविरोधं जना
आगच्छन्ति समाप्नुवन् हि निखिलास्तत्तत्समस्तं क्रमम् ॥१

अपि च,

सङ्घान्नेषु निरादरानियमिनो ये वैदिकाः पण्डिताः
प्रत्येकं नियमस्य योग्यममलं तेषां च दत्वा गृहम् ।

तत्तद्वासिबुधौघयोग्यमखिलं सर्वाधिकार्यादरा-
त्पादाब्जभृत्यमुखेन नित्यमपि तत्प्रश्नं विनैव स्वयम् ॥

किं च,

ये लौकिका भक्तियुता नितान्तं
समागता श्रीगुरुपादसेवया ।
तेषां सुखायोचितमत्र यत्त-
त्सज्जीकृतं सर्वमपि क्षणेन ॥ १६ ॥

एवं तत्तज्जनापेक्षितानि निवासयोग्यानि मनोहराणि स्थानानि अन्यान्यपि यावन्ति सौकर्याणि कर्तव्यानि तानि सर्वाण्यपि सम्यक् विरचितानि, आलयविराजमानवैभवान् भोजनशालां पण्डितगोष्ठ्यादीनि च विलोक्य एतदुत्सवदर्शनाभ्यागतानां ग्रामीणजनानामेवं सल्लापः समुद्भूत ।

विश्वनाथाभिधः कश्चित्— सखे सुन्दरक, श्रीमदखिलाण्डेश्वरीसन्निधौ यजुर्वेदमन्त्रपारायणपराणां वसुधागीर्वाणगणानां सन्दर्शनेन महानानन्दो जायते मम । तथाहि,

ह्रस्वाद्यैर्विमलस्वरैः सह गुणैर्युक्तैरुदात्तादिभि-
र्व्याप्तैः स्पष्टविराजमानमहितस्थानोद्भवैस्तादृशैः ।
वर्णैरागममन्त्रमादरभरेणोच्चारयन्तः स्थिता
शब्दब्रह्ममया इव प्रकलयन्त्येते न केषां मुदम् ॥

प्राचीभागं विमलचरिताः सामगा भूषयन्तः
साम्नां सप्तस्वरकृतविभागोज्ज्वलैश्चारुगानैः ।
प्राप्तानां ते हृदयमखिलाण्डेश्वरीदर्शनाय
द्रागानन्दाभिधजलनिधौ मज्जयन्ते नितान्तम् ॥

महेशगृहिणीलसन्महिमवर्णने तत्परैः
क्रमेण बहुभिर्बुधैरिह च पठ्यमानैर्मुदा ।
पुराणनिचयैरिदं स्थलवरं जनैरावृतं
विभाति मुनिवेष्टितं वनमिवाधुना नैमिशम् ॥

अपर आह—

दृश्यं सर्वमनित्यमेतदिति च स्पष्टं सदृष्टान्तकं
संबोध्यान्यमतानि साधुवचनैर्विद्रावयन्तो भृशम् ।
अद्वैतं परमेकमौपनिषदा ग्रन्था वदन्तोऽमलं
पठ्यन्ते विबुधोत्तमैः कतिपयैर्देवीप्रसादाप्तये ॥ २० ॥

अपि च,

दिनमनुनियमाढ्याः सात्त्विकाहारयुक्ता
बहव इह महान्तः पञ्चदश्यादिमन्त्रान् ।
परमशिववधूटीप्रीतिहेतून्पवित्रान्
सह जनै विपुलभक्त्या निश्चलाङ्गा जपन्ति ॥२१॥

किं च,

आजानसिद्धगिरिजापदभक्तिभाज-<br>
स्तालादिवाद्यधरभागवताः समस्ताः ।<br>
रम्यैर्निजैर्भगवतीगुणबोधदक्षै-<br>
राकर्षयन्ति निखिलानपि तत्र गीतैः ॥ २२ ॥

इति श्रीजम्बुनाथालयविराजमानां सकलविबुधपङ्क्तिं सभक्तिश्रद्धं संसेव्य श्रीमदम्बिकादर्शनार्थमन्तर्गमनसमये अग्रे आयान्तमात्रेयनामानं सुहृदं पश्यन् सखे आत्रेय कस्मादागच्छसि इत्यपृच्छत् ।

आत्रेयः—अधिचन्द्रमौलीश्वरसदनं श्रीजगद्गुरुमहास्वामिसन्निधौ पण्डितमण्डलीभिरारब्धं अधःकृतामृतरसं शास्त्रवाक्यार्थं श्रुत्वानन्दतुन्दिलितमनाः तस्मादेवायामि ।

अन्यः—कुत्र कुत्र शास्त्रे वाक्यार्थो वर्णितः ?

आत्रेयः—

तर्के व्याकरणे च जैमिनिकृते तन्त्रे च वैयासिके<br>
विद्यार्थिप्रवरैः प्रसिद्धविबुधैः श्रीदम्बिकेन्द्राऽन्तिके ।<br>
तत्तत्प्रश्नसमर्पितोत्तरयुतो गीर्वाणवाण्या मुदा<br>
वाक्यार्थोऽखिललोकभूषितसदस्यत्यद्भुतोऽवर्णि हि ॥

अन्यः—संस्कृतभाषया विबुधनिवहाधिकानन्दजनके शास्त्रीयवाक्यार्थे सम्यक्चलत्यपि सामान्यजनानां अप्यमुकैर्व्यव-

हरति अयं वेगेन वदतीति परं ज्ञातुं शक्यते न तु शास्त्रीय-विषयगौरवम् ।

आत्रेयः—भवदुक्तप्रकारेण स्थूलदृष्ट्यैव किञ्चित्किञ्चित् ज्ञातुं शक्यते न तु विशेषतः अथापि श्रीजगद्गुरुमहास्वामिना-माज्ञया सर्वजनोपकाराय प्रतिदिनं सायं सप्तमघण्टाया उपरि आनवमघण्टं तत्र समागतविद्वद्बृन्देषु ये प्रधानभूताः तेष्वेकैको द्राविडभाषया शास्त्रीयसरससदुपन्यासं करोति तच्छ्रवणेन सकला आनन्दाम्बुनिधौ निमग्ना भवन्तीति न्यवेदयत् ।

अन्यः—अहो अवाङ्मनसगोचरस्ताटङ्कप्रतिष्ठामहोत्सवम-हिमा ।

तथा हि,

**साम्नां गानैर्यजुरुरुजपैः पूतऋग्वेदमन्त्रै-**
**रन्यैर्मन्त्रैरपि च पठनैः सत्पुराणव्रजानाम् ।**
**नानाशास्त्रप्रथितविषयैर्गीतवाद्यैर्विभान्ती**
**कस्यानन्दं जनयति न सा सन्निधिर्लोकमातुः ॥**

सखे अन्तर्गत्वा श्रीमदखिलाण्डेश्वरीदर्शनं विधाय श्रीमठं-प्रति गच्छावः इति उभावपि श्रीपरदेवतादर्शनवन्दनादिकं यथा-विधि कृत्वा तस्माच्छ्रीजगद्गुरुमठमवापतुः ।

आत्रेयः—सखे कौण्डिन्य वैदिकब्राह्मणानां नियमेनात्र भोजनशालानिर्मितेति श्रूयते कुत्र सा ?

कौण्डिन्यः— अत्र मण्डपे निष्कुटे च ।

आत्रेयः—इदानीं भोजनसमय एव भवेत् तत्र गत्वा सम्यक् पश्याव इति द्वावपि अन्तरयामिष्टां ।

कौण्डिन्यः—परितो विलोक्य सर्वे अत्यद्भुताः संपादिता भोजनसामग्र्यः । तथाहि,

कान्त्या निजेन धवलेन च मार्दवेन
द्रोणोज्ज्वलत्कुसुमसद्रुचिमार्दवं च ।
सन्तर्जयद्विमलजीरकशालिराज
दन्नं समस्तादिशमप्यमलीकरोति ॥ २५ ॥

बालावनीधरोद्भवसुमधुरकदलीफलानि सर्वेभ्यः ।
प्रीत्या ददाति तावद्यावन्मामेति नोदभूच्छब्दः ॥

गोधूमाज्यसुशर्करादि कलितं नानाप्रभेदोज्ज्वलं
भक्ष्यं स्वादुतमं स्वदुर्लभतरं वीक्ष्यास्थया तादृशा ।
स्वीयेमत्रवरे बहूनि कुतुकात्संगृह्य भक्ष्याणि ता-
न्यत्तुं भोक्तुमपि प्रहीणघृतिकः कश्चिद्भृशं खिद्यते ॥

तिलान्नमुद्गोदनशर्कराम्न
श्रीनारिकेलान्नमुखौदनानि ।
स्वादूनि सर्वाण्यपि तानि भोक्तुं
नास्तेऽवकाशोऽन्तरिति ब्रुवन्ति ॥ २८ ॥

नित्यं नाकिगणा अदन्ति कुतुकात्पीयूषरुच्युज्वलं
मां भूनाकिगणा अपीह समये तुष्यन्तु भुक्त्वा भृशम् ।
इत्येवामृतरुक्समपर्पट इति व्याजेन नैजात्मना
प्रत्येकं वसुधासुरानकलयत्तृप्तान् समस्तानपि ॥ २९ ॥

केचिच्छोष्यं परमिति परे चोदनं भक्ष्यमन्ये
प्रेम्णा दानं सततमितरे केचिदाज्यं सुगन्धि ।
इत्थं स्वस्वप्रियतरपदार्थं भृशं श्लाघयन्तः
भुक्त्वैकान्ते कुतुकभरिताः सर्वलोका अभूवन् ॥ ३० ॥

प्रतिदिनमपि माकीं भूसुराणां सहस्र-
त्रयमनितरबाधं भक्ष्यभोज्यादिपूर्णम् ।
सुरुचिरमिह भुक्त्वा भोजनं सेवते तं
गुरुवरमखिलाण्डस्येश्वरीं तत्पतिं च ॥ ३१ ॥

अपरेद्युः श्रीपरदेवताताटङ्कप्रतिष्ठामहोत्सवदर्शनायेव झटिति समागते सुमुहूर्ते आबालात् एतदुत्सवावलोकनाभिलाषया स्वस्वकुटुम्बकृत्यमवश्यकर्तव्यमप्यविगणय्य महता कोलाहलेनाभिषेकसमयं प्रतिपालयद्भिः नानादेशसमागतजननिवहैः कवचीकृतेषु आलयस्योपरिभागेषु गोपुरेषु प्राकारेषु तदावरणभित्तिषु अन्तःस्थितमण्डपनिचयेषु च, महाभिषेकद्योतकनाळकगम्भीरशब्दैः व्याप्तेषु सर्वदिगन्तेषु राजकीयजनरक्षकाधिकारिवर्गैरलंकृतेषु

तत्र तत्र मार्गेषु, वाद्यमानेष्वनेकविधमङ्गळवाद्यकदम्बेषु, गीयमा-
नेषु भागवतगोष्ठीभिः ताळमद्दळादिवाद्यैः साकं पवित्रतरमनो-
हरादिदम्पतिपुण्यचरितेषु, सङ्कमध्यगमनाशक्तैः वृद्धरोगिबाल-
कादिजनैश्च भूषितेषु तत्तद्गृहसौधेषु, सानन्दं निगमपारायण-
परेषु धरणीगीर्वाणगणेषु, कुत्रचित् अव्याजविधृतपारमेश्वरभक्ति-
भरैर्भस्मालंकृतशरीरैः शैवसंघैः सतालवाद्यं गीयमानेषु द्राविड-
प्रबंधेषु, तत्र तत्र धूपितागरुगुग्गुल्वादिगन्धद्रव्यधूमधूम्राणि नील-
नीरदकदम्बचितानीव विलसितानि गगनतलान्यालोक्य नर्तनपरेषु
मयूरकुलेषु, आजगद्गुरुमठात् आचाखिलाण्डेश्वर्यालयात् मध्ये
किंचित् मार्गं विहाय पार्श्वद्वयेऽपि क्रमेण राजमानेषु करितुरग-
पदातिछत्रचामरतोरणादिबिरुदनिवहेषु, प्रागुद्दिष्टसुमुहूर्ते कु-
म्भाभिषेकोत्सवकरणाय पूर्वमेव यथाविधि सर्वमपि कृत्यं
निर्वर्त्य श्रीमहास्वाम्यागमनं प्रतिपालयत्सु तदालयपूजानियुक्तेषु
पण्डितेषु, श्रीलोकगुरुवरोऽपि निजास्थानात् श्रीपरदेवतासन्नि-
धिगमनाय बहिर्निरगात् । आयाति आगमिष्यतीति तत्र स्थित-
जनसमूहैः विरचितैः कोलाहलरवैर्मुखरितेषु निखिलदिङ्मुखेषु,
श्रीजगद्गुरुमहास्वामिनः तद्दिनारम्भकालोचितं सकलमपि
निजं नियमं विधिवत् विधाय श्रीत्रिपुरसुन्दर्या साकमाराधि-
ताखिलाण्डनायिकातेज इव मूर्तिमत् कान्तिमयमिव सर्वतः कु-
र्वाणं अत्यद्भुतमदृष्टपूर्वमासेचनकमक्ष्णां तत्तादृशं श्रीचक्रताटङ्क-
युगलं सादरं स्वहस्ताभ्यां परिगृह्य श्रीमठीयसर्वाधिकारिप्रभु-
वरप्रमुखैः पुरो गत्वा सन्दर्शितसरणयः पार्श्वद्वयविधृतमहाश्वे-

तच्छत्राः पुरोभागे संवीज्यमानधवलचामराः श्रीमठान्निर्गत्य अनेकसहस्रजनकदम्बनिबिडिततया निश्वसितुमप्यवकाशशून्येन पथा मन्दं मन्दं महताश्रमेण गत्वा श्रीमदखिलाण्डेश्वरीसन्निधिमभजन् ।

ततः पूर्वमेव उद्दिष्टशुभमुहूर्तेन सह सन्नद्धाः दीक्षाभृत् पण्डिताः श्रीगुरुचरणकरारविन्दात् सभक्तिश्रद्धं तत्ताटङ्कयुगलं स्वीकृत्य तेभ्योवाप्तानुज्ञाः शोभने तत्र मुहूर्ते मन्त्रपूतैः पुण्यतीर्थैः सकलभुवनक्षेमंकरं समस्तजनसन्तोषपारावारशारदराकाहिमकरं तत्तादृशमहिमभास्वरं श्रीजम्बुनाथाखिलाण्डेश्वर्योः महाकुम्भाभिषेकमङ्गळमहोत्सवं विधिवद्व्यतानिषुः ।

तत्तादृग्गुरुसार्वभौमरचितामाज्ञां पुरस्कृत्य तां
शास्त्रोक्तेन कृतं पथा च जगतां क्षेमंकरं पावनम् ।
द्रष्टॄणां सफलां जनिं प्रकलयच्छ्रीजम्बुनाथस्य त-
त्पत्न्या वीक्ष्य मुदं परां समवहन्कुम्भाभिषेकोत्सवम् ॥

श्रीमज्जगद्गुरुवरः परदेवतायाः
श्लाघ्यं समस्तविबुधैरचितं पवित्रम् ।
वीक्ष्याभिषेकमघनाशकमात्त मोदः
स्तोतुं तदा भगवतीमुपचक्रमे ताम् ॥ ३३ ॥

तथा हि,

अखिलाण्डनायिके ते निगमैस्तुत्ये पदाम्बुजे भक्त्या ।
पञ्चभिरिह मञ्जरीभिरहमर्चामि त्वदीयकरुणाप्त्यै ॥

मातर्मान्यगुणालये त्रिजगतां पोतस्तवायं शिवे
भीतो जन्मजघोरतापभरतो नीतश्च कष्टां दशाम् ।
पूतत्वत्करुणामृतामलसरित्पातं समाकाङ्क्षते
सा तं जम्बुपतेः प्रिये त्वमधुना भक्तस्य शीघ्रं कुरु ॥

कामाक्षीणबलप्रदात्मनयना सोमार्धचूडामणे
र्वामाङ्कैकविभूषणा स्वजनता कामाद्यरिध्वंसिनी ।
सीमातीतगुणाश्रया श्रुतिशिरोवाङ्मान्यकीर्त्युज्ज्वला
सा मां जम्बुपतेर्वधूर्भगवती वामामणी रक्षतु ॥३६॥

अकृत्रिमवचांस्यपि प्रथितवैभवानीश्वरि
त्वदीयगुणवर्णने भजति मूकभावं स्वयम् ।
अलं कथमिमे जना जननि मादृशास्त्वत्स्तुतौ
निसर्गकृपयात्र मां झटिति जम्बुनाथप्रिये ॥ ३७ ॥

हार्दध्वान्तनभोमणिं स्वजनताभीष्टाप्तिचिन्तामणिं
देवव्रातशिरोमणिं हिममहीभृद्वंशमुक्तामणिम् ।
पापध्वंसचणं मणिं मुनिमनः पेटीविराजन्मणिं
जम्बूनाथवधूमणिं हृदि दधे त्रैलोक्यभूषामणिम् ॥३८॥

देवेषु सत्स्वपि बहुष्वखिलान्विहाय
त्वां सर्वलोकजननीं करुणार्द्रदृष्टिम् ।
मासं जनं यदि जहास्यगतिं त्वदीयं
कं प्राप्नुयामि शरणं भवतीह को वा ॥ ३९ ॥

मञ्जर्याश्रयतो विभान्ति भुवने लोका इतीदं विना
त्वत्सङ्गेन च मञ्जरी मम लसेत्सेयं सदेत्यम्बताम् ।
अम्लानां नवमञ्जुवर्णकलितां श्रीजम्बुनाथप्रिये
कण्ठे सादरमर्पयामि कुरु मां धन्यं गृहीत्वा मुदा ॥४०॥

इति स्तुत्वा गृहीताखिलाण्डेश्वरीप्रसादः श्रीचन्द्रमौलीश्वरपूजनाय तत्स्थानमभजन् । अन्येपि लोकनिवहाः सानन्दं कुम्भाभिषेकोत्सववैभवमालोक्य श्रीपरदेवतादर्शनादिकं महताश्रमेण विधाय श्रीचन्द्रमौलीश्वरप्रसादग्रहणार्थं श्रीमठमाटीकन्त ।

माध्यन्दिनं स्वनियमं विधिवद्विधाय
श्रीचन्द्रमौलिपदपङ्कजपूजनं च ।
कृत्वा यथावदखिलानपि तत्प्रसाद-
दानादतोषयदसौ गुरुसार्वभौमः ॥ ४१ ॥

तस्मिन्सायाह्नि सर्वे गुरुवरनिकटं प्राप्य नत्वा पदाब्जे
ऽस्माकं श्रीमद्भिरद्यप्रथितकरुणया सारधर्मोपदेशः ।

कार्यश्चार्यैरितीत्थं सविनयरचितप्रार्थनासक्तचित्तः
साचार्येन्द्रः प्रियेणारभत सरससद्धर्मसंबोधनाय ॥ ४२॥

द्राक्षेक्षुमाक्षिकामृतरुचिशिक्षाविधिसुदक्षमसदृक्षम् ।
श्रुत्वा तदुपन्यासं सर्वे विन्दन्नमन्दमानन्दम् ॥ ४३ ॥

अन्येद्युरत्र बहुदूरात्समायातविविद्वत्सु वेदनिपुणान्
संमान्यमञ्जुतरपीताम्बरस्वर्णरूप्यादिमैः सकुतुकम् ।
श्रीचन्द्रमौळिवरपूजाप्रसादेन दत्वा विशुद्धचरितः
सर्वान्बुधान्मोदयुक्तान्जगद्वन्द्यपादो गुरुः प्रहितवान् ॥

शास्त्रज्ञानां बुधानामपि महति सदस्यावृते लोकबृन्दै-
स्तत्तज्ज्ञानार्हपीताम्बरकनकलसत्कम्बळक्षौममुख्यैः ।
द्रव्यैर्युक्तैः प्रसादैरमृतरुचिकलाचारुचूडस्य शंभोः
स्वीयेनानुग्रहेण प्रथितगुरुवरः प्रैषितत्तोषयित्वा ॥ ४५ ॥

अन्यान्मान्यगुणान्प्रभूञ्जिगमिषून्ग्रामं पुरं च स्वकं
पादाम्भोजकृतानतीननुमतिं चाकाङ्क्षमाणान्मुदा ।
वाचाशीर्वचनैश्च मूर्धचलनैः सत्प्रीतिसंबोधकैः
सन्मानैः सदनुग्रहैश्च सकलान् स प्रेषयामास हि ॥

कुम्भाभिषेकोत्सवकालतः परं
संभावनावारचतुष्टयावधि ।

कृताक्रमेणागतपण्डितानां
श्रीदेशिकेन्द्रेण कृपालुना मुदा ॥ ४७ ॥

तत्ताटङ्कपरदेवताकरुणया संपूर्णया पूज्यया
निर्विघ्नं च विधाय सर्वमहितं ताटङ्कभूषोत्सवम् ।
तादर्थ्येन समागतानपि समान्संमान्य लोकान्तदा
संप्रेष्यादरतो जगद्गुरुवरः सन्तोषमापातुलम् । ४८ ॥

इत्थं शङ्करदेशिकेन्द्रचरणाम्भोजातसंजातया
भक्त्यात्यल्पिकया जडोऽद्य विबुधैः कार्येऽत्र कृष्टो बलात् ।
प्राप्तुं तामखिलाण्डमातृकरुणां संसारविच्छेदिनी-
मेतं ग्रन्थमलेखिषं न कवितापाण्डित्यगर्वादहम् ॥ ४९ ॥

यथाम्बुना संमिलितं विभज्य
क्षीरं परं चूषति राजहंसः ।
तथाऽत्र गृह्णन्तु विहाय दोषान्
गुणान् परं पण्डितराजहंसाः ॥ ५० ॥

श्रीमद्देशिकराजपादजलरुट्संसेवनावाप्तत-
त्कटाक्षाङ्कुरलेशजातधिषणाभाजा मया वर्णिते ।
ग्रन्थेऽस्मिन् यदि चाल्पकोऽपि सुगुणः स श्रीगुरूणामिति
क्षन्तव्या इतरे च दोषनिवहा मत्का इति प्रार्थये ॥

इत्थं कृपाभरजुषा गणपत्यभिख्य-
श्रीमद्गुरोर्मृडवधूकरुणाप्तिहेतोः ।
पञ्चापगेशकविना रचितेऽत्र चम्पू-
ग्रन्थे समाप्तिमगमत्स्तबकश्च षष्ठः ॥ ५२ ॥

श्रीमदखिलाण्डेश्वरीताटङ्कप्रतिष्ठामहोत्सवचम्पूः संपूर्णा ।

